425 राजराजः कुबेरे स्यात्सार्वभौमे धनाधिपे ।
द्विजराजस्तु विप्रेन्द्रे शशाङ्के तार्क्ष्यशेषयोः ।
धर्मराजः कृतान्ते स्याद्बुद्धदेवे तदिष्यते ।

इति चतुरक्षरजान्ताः ।

झः पुमान्भ्रमणे नष्टे प्रतापे हंसचोरयोः ।
धातरि स्याद्बो झा तु मदवाय्वोरपि स्त्रियाम् ।

इत्येकाक्षरझान्ताः । द्व्यक्षरादयोऽप्रसिद्धाः ।

430 ज्ञः प्राज्ञे चन्द्रतनये विषये चात्मगर्वयोः ।
व्यूहे लेपे मूर्ध्नि स्वरध्वाने क्ली भयपद्ययोः ।
उत्ताने मूढरूपे च पण्डितैस्त्रिषु कथ्यते ।

इत्येकाक्षरज्ञान्ताः ।

दक्षिणे सरले प्राज्ञो विदग्धोदारयोरपि ।
संज्ञा स्याज्ज्ञानुभार्यायां गायत्र्यां चैव नामनि ।
435 चेतनायां च हस्तादेः सूचनायां च वस्तुनः ।

इति द्व्यक्षरज्ञान्तः ।

नामस्मृत्योरभिज्ञा स्यात्क्षेत्रज्ञो निपुणात्मनोः ।

इति त्र्यक्षरज्ञान्तौ । चतुरक्षरमप्रसिद्धम् ।

इति राघवीयनानार्थमञ्जर्यां चवर्गान्तवर्गाः परिसमाप्ताः ।

---

425. ACDE कुबेरः
426. CE om.lines 426-7
428 ACDE झुः for झ
429 Col C इति झान्ताः. B द्व्यक्षरादिझान्तोऽ-प्रसिद्धः
430 E °वर्गयो° for °गर्वयो
432 E मूढे° for मूढ°
433 Mss (wrongly) प्राज्ञे. AD °ग्धोदरयोर्
435 E हस्तादे A वस्तुनि
436 Col. ADE °ज्ञान्ताः B चतुरक्षरोप्रसिद्ध., Mss. राघवीये. A om नानार्थमञ्जर्यां

टः पुमान्करटे धूमे चापेऽर्ककिरणे ध्वनौ ।
कवाटावर्तयोः सूनौ मूल्यावृत्त्योस्तु टा स्त्रियाम् ।

इत्येकाक्षरटान्ताः ।

देवाशिल्पिनि सूर्ये च त्वष्टा दिष्टं तु दैवते ।
दिष्टः साक्षात्स्थिते काले मुष्टिर्दैर्घ्ये प्रमाणजे । 440
अट्टं भित्तिचतुष्के स्यात्क्षामेऽत्यर्थे गृहान्तरे ।
यष्टिर्दामनि दण्डे स्याद्याप्यवत्फलकेऽपि च ।
जटा सटा लग्नकचे लतामूलेऽपि केसरे ।
कोटिरग्राश्रचापाग्रसंख्योत्कर्षाश्रयेषु च ।
व्युष्टिः फले समृद्धौ च स्तोत्रे दृष्टिस्तु दर्शने । 445
ज्ञानेऽक्षिण सृष्टं क्लीबे स्यात्प्राज्यनिश्चितयोरपि ।
त्रिषु स्यान्निर्मिते मुक्ते कष्टं गहनकृच्छ्रयोः ।
दक्षामन्दागदेषु स्यात्पटुः कूटं तु न स्त्रियाम् ।
मायानिश्चलयन्त्रेषु कैतवानृतराशिषु ।
अयोघने शैलशृङ्गे सीराङ्गेऽप्यथ शोभने । 450
अभावक्षेमयो रिष्टमिष्टिर्यागेच्छयोरपि ।
इष्टं संस्कारयोगे च यागे पूज्यतमेऽपि च ।
आशंसिते प्रियतमे वाटो वृतौ स्थलाध्वनोः ।
गृहारामप्रदेशे चावटे रोधसि पुंस्ययम् ।
कुटी तु स्यात्कुम्भदास्यामल्पवेश्मनि पुंसि च । 455
पट्टः पेषणपाषाणे व्रणादीनां च बन्धने ।

---

437. Before l.437, B reads हरिः
438. E मुष्या° for मूल्या° Col. A इति टैक
439. AD वेद- for देव- ABC त्वष्ठा for त्वष्टा
440 E दिष्ट for दिष्ट.. Sl. no BC 220
441. BC प्रहातरे
442. B वाच्यवत्. E व्याप्यवत्फलकेपि च for post. half
443 D जटासटौ
444 D -सांख्यो-
445 Cf AK. I. 2411. B फल- for फले AD स्तोमे for स्तोत्रे
446. AD ज्ञानेक्षण-, B ** क्षिण
449-50. = var. AK. 2407-8
450. CE सिरागे
451. AD रिष्टरिष्टिर्, B रिष्टिरिष्टिर् ; C रिष्टः रिष्टिर् for रिष्टमिष्टिर्. ACDE यागे चेयेपि च
452 AD योगे for यागे
453 Mss वृत्तौ for सूनौ, cf. notes
454 D वटे for अवटे
455 BCE वा for च
456-7. = MED. 35.21

चतुष्पथे च राजादिशांसनान्तरपीठयोः ।
पट्टी ललाटभूषायां पट्टी लाक्षाप्रसाधने ।
विटोऽद्री लवणे पिङ्गे मूषिके खदिरेऽपि च ।
460 कूटो यन्त्रेऽनृते राशौ निश्चले लोहमुद्गरे ।
मायाद्रिशृङ्गयोस्तुच्छे सीरावयवदम्भयोः ।
दिवाकरे तत्किरणे पुरद्वारे मतङ्गजे ।
त्रुटी लेशे संशये च कालाल्पैलाप्रमाणयोः ।
कटोऽतिरेकशवयोः क्रियाकारिश्मशानयोः ।
465 गजगण्डे शवरथे शय्यायां च स्त्रियां मतः ।
किलिञ्जे समये पुंसि कटिः श्रोण्यां कटी स्त्रियाम् ।
वर्षे चावरणे क्लीबे कटुर्मत्सरतीक्ष्णयोः ।
मधुरादिरसे कट्वकार्याकार्य(?,प्रियेषु च ।
क्षवे प्रियङ्गौ गन्धे स्यात्त्रिषु स्त्रीलिङ्गकेऽप्ययम् ।
470 रोहिण्या पूतनायां च रटस्तु गतिशब्दयोः ।
घटः कुम्भे राशिभेदे मणौ ह्लादिनि(?)वृन्दयोः ।
स्त्रिया तु घण्टालम्बिन्योश्चटुश्चाटुः प्रियंवदे ।
छटा समूहे कान्तौ च वेष्टने च वटस्तरौ ।
पिष्टादिना त्वमाङ्गल्यधामकुड्याङ्गणेषु च ।

इति द्व्यक्षरटान्ताः ।

475 धूर्जटिर्धूर्तचिह्ने स्याच्छंकरे चाथ संपुटः ।
समुद्गके कुरबके चारिष्टं सूतिकागृहे ।

---

457. AD om. lines 457-8
458. Cf *VL.* 77 20 cd
459. = *MED.* 35.27 cd E पिंगे for पिङ्गे
460. AD कूप–; BCE कूपे for कूटो
462. Sl no. BC 230
464. A om. the whole line and B the prior half, B क्रियाकारि–, CE क्रियाकारी–
466. AC कटि for कटी
467. ABD कटु for कटुर्
468 B कट्वकार्यकार्यां°; C °कट्वकार्याकार्यां°
469. AD गन्ध for गन्धे. Mss. read °केव्यय (प and व being indistinguishable in Grantha and Malayalam scripts)
472 ACD °म्बिन्योश्
474 cf. notes
475 D शंकरे for शंकरे
476. AD पुरके, B वरके, CE परवके for कुरबके

अशुभे निम्बवृक्षे च शुभे तक्राङ्कयोः पुमान् ।
काके च फेनिले नीचे व्यसनेऽनर्थलम्बयोः ।
भाग्यहीनेऽथ करटः कुसुम्भगजगण्डयोः ।
काके च वाद्यभेदे च श्राद्धे चैकादशेऽपि च । 480
शृगाले निम्बजीवे च कपटः कैतवेऽपि च ।

इति त्र्यक्षरटान्ताः ।

शिपिविष्टस्तु दुश्चर्मखल्वाटहरिशंभुषु ।
तुलाकोटिस्तु मञ्जीरे क्रकचे कुकरच्छटः ।

इति चतुरक्षरपञ्चाक्षरटान्ताः ।

ठः शंकरे बृहद्ध्वाने वृत्ते वर्णेऽपि वाच्यवत् ।
स्तम्भने साहसे चन्द्रमण्डले कर्णवेदने । 485

इत्येकाक्षरठान्ताः ।

ज्येष्ठोऽग्रजे स्त्रियां ज्येष्ठा देव्यां नक्षत्रशस्तयोः ।
काष्ठा दिक्कालहारिद्रस्थित्युत्कर्षेषु तु स्त्रियाम् ।
दारौ क्लीबमथो निष्ठा निष्पत्तौ यज्ञकर्मणि ।
नाशान्तयोश्च निष्कर्षे कोष्ठोऽन्तर्जठरेऽपि च ।
कुसूलेऽन्तर्गृहे कण्ठोऽन्तिके शब्दे गलेऽपि च । 490
कामवृक्षे च मूर्खे च गूढविप्रियकारिणि ।
अलसे धुस्तुरे धूर्ते मध्यस्थपुरुषे शठः ।
मठश्छात्रादिनिलये बलात्कारे हठः पुमान् ।

इति द्व्यक्षरठान्ताः ।

---

478. E नर्थे- for ऽनर्थ. B °टम्बने
479. AD –जगदण्डयोः
482. B –खर्वाट–
483. A कुकरच्छट, B ककरच्छट-, C [illegible] करच्छटः. Sl. no. ACD 240. Col. BC इति चतुरक्षरटान्तौ, D चतुरक्षरपञ्चाक्षरटान्तौ, E चतुरक्षरटान्ताः
484. E व्रते for वृत्ते
485. Col. A इति ठेकम्
486. B –समयोः for –शस्तयो
487. B काष्ठो. A स्थित्युत्कर्षे तु च, BE स्थित्यो-त्कर्षेषु तु; D स्थित्युत्कर्षे*तु
492. ACD दुस्तुरे; B धुर्धुरे, E दतुरे for धुस्तुरे. C (by corr.) तीर्ते, (before corr.) तीर्थे for धूर्ते
493. Sl. no. AC 245. Col. A ठद्विः

इभस्तम्बेऽपि च स्त्री वा तु स्यात्पिप्पलिचव्ययोः । 510
भाण्डमस्त्री नदीपात्रे भाजने चामरेऽपि च ।
स्यादश्वाभरणे मूलवणिग्द्रव्ये च मन्त्रके ।
चण्डा धनहरीशङ्खपुष्प्योः पुंस्यतिकोपने ।
चण्डी कात्यायनीहिस्रकोपनस्त्रीषु सप्तता ।
क्रीडा केलिप्रकारे स्यात्खेलावज्ञानयोरपि । 515
गुडः स्याद्गोलके हस्तिसंनाहेक्षुविकारयोः ।
व्याळ(ड): सर्पे पशौ मासे भूगोवाक्षु त्विडा इळा ।
बुधपत्न्या यज्ञपात्रे क्ष्वेडा वशशलाकयोः ।
दन्तोष्ठवाद्ये शब्देऽस्त्री पुंसि कर्णमले विषे ।
नाडी काले षट्क्षणे स्यात्सिरायां मरुदादिषु । 520

इति द्व्यक्षरडान्ताः ।

वरण्डस्त्वन्तरावेद्यां युध्यतोर्गजयोर्द्वयोः ।
संदोहे मुखरोगे च काल्यावर्ता(र्त्य ?)सिधेनुषु ।
करण्डो मकुटे पात्रे कारण्डस्तु खगान्तरे ।
कोदण्डो राशिभेदे स्यात्कार्मुके च न तु स्त्रियाम् ।
तुलादण्डो मानदण्डे चर्ममुण्डा तु चर्चिका । 525

इति त्र्यक्षरचतुरक्षरडान्ताः ।

ढः पिशाचे भये काले जडे गायकरागयोः ।
ध्वनौ पान्थे नपुंसि स्यात्तूर्ये च ज्ञानमूर्खयोः ।
ढक्कायां स्त्री गुणे सर्पे त्रिषु स्याद्गूढसौम्ययोः ।

इत्येकाक्षरढान्ताः ।

---

510 ABD °स्तभे for °स्तम्बे E –चाव्ययो
513 E °पुष्पोरस्यति° for °पुष्प्यो पुस्यति°
514 E कोपनस्त्रिषु स्मत for post half
515 Mss (wrongly) खला– for खेला–
516 A गुड., Mss (wrongly) हस्ते for हस्ति –
518 E षडा for क्ष्वेडा
520, AD शेकाले षट्क्षणेपि स्यात् for prior half CD साराया for सि°
521 Mss almost परहमन्तरा° (corrupt)
522 B कल्यावर्नासि°, E काल्यावयासि° for काल्यावर्तासि°
524 A तु न तु B तु न त [च] for च न तु
524 After this line, E reads इति त्र्यक्षरदान्ता
525 [illegible] no ABCD 260
526, ABCD पिशाच– for °चे

यादोऽण्डजे दृढे पुंस्त्री प्रतिज्ञायां भृशे नपुम्।
530 शुभावहेऽनुमाने च गूढं तु त्रिषु ना दृढः।
शक्के स्थूले च व्यूढस्तु विन्यस्ते संहतावपि।
ब्राह्मणे पृथुलेऽपि स्याद्गाढं ध्वान्ते दृढेऽपि च।

इति द्व्यक्षरढान्ताः।

मगाढं तु भृशे कृच्छ्रे मुसृण्ढिः शस्त्रमूर्खयोः।
समूढः पुञ्जिते भुग्नेऽपस्मारे च धुरंधरे।

इति त्र्यक्षरढान्ताः। चतुरक्षरमप्रसिद्धम्।

535 णशब्दस्तु पुमाञ्जारे भैरवे कण्टके ध्वनौ।
णा स्त्रियां ध्वजिनीशय्याधेनुनासाकृपासु च।
णं सरोजदले ज्ञाने त्रिषु निस्तुषवस्तुनि।

इत्येकाक्षरणान्ताः।

गुणोऽप्रधाने ज्यासूतरूपादिषु वृकोदरे।
स्तम्भे संध्यादिसत्त्वादिशब्दादिहरितादिषु।
540 अभ्यासेन्द्रियविद्यादिपट्वत्वाद्यर्जुनेषु च।
द्रव्याश्रिते नीतिशास्त्रे साख्यादिविनयादिषु।
शौर्ये धैर्ये च गाम्भीर्ये कूपके वधिलक्षणे।
न स्त्रियां स्यादौदनिके चाथ द्रोणस्तु पर्वते।
आढकानां चतुष्के च वायसे नीवृदन्तरे।
545 कृपीपतौ च द्रोणी तु गवा घासपरिस्थले।

---

529 E भृशं for भृशे
530. B त्रिषु वा, CE त्रिस., D त्रिषु च
531. B स्थूले च शक्के (by transp ), B संहते- पि च, E हसतावपि metathesis
532 E गाद- for गाढ. B गाढवाते मढेऽपि च for post. half
533 AB मुसण्ठि, C मुसण्डि; D मुसण्डि, E मुसुण्डि. (all these words being peculiar are not traceable)
534 E समूढ. पूजिते भुग्ने for prior half
536 ABD धेनु- for धेनु-
538. Mss. प्रधाने for ऽप्रधाने
540. A सभ्यसेन्द्रिय°, B अभ्यस्ते न्द्रिय°. AC DE पट(E 'ड्ढ)त्वार्जुने°
543. E द्रोण्यस्तु for द्रोणस्तु
544. AD ऽपि for च. E निवृत्तरे (sic)
545. Mss. कृपीतनौ (corrupt), E घास- for घास-

स्त्रियां काष्ठाम्बुवाहिन्यामथ भ्रूणोऽर्भकेऽपि च ।
स्त्रैणगर्भेऽथ वाणस्तु बलिसूनौ शरे पुमान् ।
कणोऽतिसूक्ष्मे धान्यांशे पिप्पल्यां जीरके शरे ।
वेणी स्यात्कचबन्धे च जलस्रोतसि चाल्पके ।
घोणी मूदारकेऽपि स्यादेणी तु मृगयोषिति । 550
गणः समूहे प्रमथे गणनायामपि स्त्रियाम् ।
सेनाविशेषे वितते मणी रत्नेऽपि कथ्यते ।
पणो द्यूतादिपूत्सृष्टे भृतौ मूल्ये धनेऽपि च ।
ताम्रिके कार्षिके कुक्कुटायुधादिपरिग्रहे ।
कुणिस्त्वौषधभेदे च कुकरेऽपि च पुंस्ययम् । 555
स्थाणुः शर्वे स्थावरादौ स्थिरे कीले प्रकीर्तितः ।
वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे ।
विलेपने कथायां च गुणरूपयशःसु च ।
निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः ।
रवे युद्धे रणः पुंसि ध्वनिमात्रे कणक्वणौ । 560
ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः ।
स्थूणा स्तम्भे गृहस्य स्याल्लोहादिप्रतिमासु च ।
स्पृहापिपासयोस्तृष्णा जुगुप्सा करुणा घृणे ।
तीक्ष्णं समुद्रलवणे विषे लोहादिसैन्ययोः ।
युद्धे त्रिषु खरे क्षारे कटौ चात्मघ्नि पुंसि वा । 565
प्राणो हृन्मारुते बोले काव्ये जीवेऽनिले बले ।
तार्णं तु तृणजाले स्यात्क्लीबे त्राणं तु रक्षणे ।
कृष्णस्तु केशवे व्यासे कोकिलेऽर्जुनकाकयोः ।

---

549. E चाङ्के for चाल्पके
550. ACDE प्रेणी for एणी
551. E प्रथमे *for* प्रमथे
552. Mss. मणिरत्नेऽपि
553. = *AK. i.* 2427
554. Mss. transp. ll. 554 and 555 तांत्रिके
555. AC कुणास्; D वुणीस् for कुणिस्. AD कुकरे, E तुकरे for कुकरे. Sl. no. ABC 270
557. E चाक्षरे
558. E विलेपनकथाया
560. Mss कणः कणौ (व व)
564. Sl. no. A 280 ; C 275
566. Mss. बाले for बोले and ऽनले for ऽनिले
567. E तृणजाले
568. E कोकिलार्जुन-

शुद्धे तामिस्रपक्षेऽग्निकलिनीलगुणेषु च ।
570 कृष्णा तु द्रौपदीनीलीहरक्रूरेऽप्यपि त्रिषु ।
पिप्पल्यां च तुलस्यां च क्लीबे लोहमरीचयोः ।
दुरिते मेचके, द्रव्येऽथो श्रेणिः कारुसंहतौ ।
रथ्यापङ्क्तौ सेकपात्रे नितम्बे श्रोणिरिष्यते ।
वृष्णिस्तु यादवे मेषे जयन्तेऽपि च कथ्यते ।
575 कर्णः श्रोत्रे सूर्यपुत्रे तूर्णं शीघ्रे तदव्ययम् ।
जिष्णुर्जेतरि देवेन्द्रे विष्टरश्रवसि स्मृतम् ।

इति द्व्यक्षरणान्ताः ।

तरुणस्तु नवे यूनि मद्ये प्रथम उत्कटे ।
अरुणः कपिले कुष्ठे संध्यारागेऽर्कसारथौ ।
अव्यक्तरागे निःशब्दे द्रव्ये त्रिषु निरूपितः ।
580 स्त्रियामतिविषाश्यामामञ्जिष्ठात्रिवृतासु च ।
द्रविणं तु बले वित्ते काञ्चनग्रहभेदयोः ।
शरणं गृहरक्षित्रोर्वधे च करणः शिशौ ।
शूद्राविशोः सुतेऽपि स्यात्करणं रतिबन्धने ।
प्राणे च साधकतमे नृत्तसंस्थानकर्मणोः ।
585 क्षेत्रगात्रेन्द्रियेषु स्याद्ववादावब्जहारयोः ।
संवेशेऽप्यथ यन्त्राणां बन्धने रक्षणेऽपि च ।
ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु ।
हरिणः स्यात्कुरङ्गे च पाण्डरेऽपि प्रकीर्तितः ।
हरिणी स्यान्मृगीहेमप्रतिमाहरितादिषु ।
590 वृत्तभेदे यूथिकायां दूर्वादौ सुरयोषिति ।
दक्षिणः सरलोदारपरच्छन्दानुवर्तिषु ।

---

569. E -नीले गुणेषु च
570. E -कृष्णेऽपि for -क्रूरे°
574. Sl. no. C 280
577. [illegible] प्रमय
578. A (before corr.) करुण
584. ABC साधकतमे; (ध and य are confused in Grantha script)
585. C क्षेत्र. AD बदा(D °वा)दाव (D°वा) हारयो; B बवादा°; CE प्रवादा° for ववदा°
588. B च for अपि
589. E मृगे for मृगी-

दानद्रव्ये हर्षणं तु योगभेदे मदेऽपि च ।
श्राद्धदेवे विषाणं तु पशुशृङ्गेभदन्तयोः ।
क्रोधे वराहदंष्ट्रे च पुंनपुंसकयोरपि ।
प्रवणः क्रमनिम्नोर्व्यो प्रह्वे ना तु चतुष्पथे । 595
संकीर्णौ निचिताशुद्धौ श्रीपर्णं कमलेऽपि च ।
बिल्वेऽथ ईरणं शून्ये ऊषरेऽपि प्रचक्ष्यते ।
प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु ।
प्रतीच्यां च सुरायां च वारुणी स्याद्वणिक्पथे ।
विपणिश्च करेणुस्तु वारणानां च योषिति । 600
कारणं करणे हेतुवादयोः शेखरेऽपि च ।
यातनायां हस्तिसूत्रे मण्डनाङ्कणयोरपि ।
मार्गणो याचके बाणे प्रार्थनेऽन्वेषणेऽपि च ।
लवणो रसरक्षोऽब्धिभेदेषु त्रिषु चेष्यते ।
कारिणी हस्तिपिप्पल्यामभिप्रायगजस्त्रियोः । 605
सारिणी अल्पसरितां(ति ?)रोहणो रत्नपर्वते ।
निर्वाणं निर्वृते मोक्षे सुखे नग्नेऽपि हर्षणे ।
सुवर्णप्रतिमायां च नाशे च गजमज्जने ।
चारणो नित्यसंचारे पुंसि स्याद्देवगायके ।
लक्षणं नाम्नि चिह्ने च गुणे निर्वाचनेऽपि च । 610
पयावी सुन्दरे भाग्ये भूषणादावपीष्यते ।

इति त्र्यक्षरणान्ताः ।

तमोमणिस्तु खद्योते नीलमण्यामुडौ शशी ।
परायणमभिप्रीतौ तत्पराश्रययोरपि ।

---

592. B च समते, CE गुरेपि च
594. CD क्रो(प्रो ?)ध
596. C निशिता°
597. B इरिण AD प्रवक्ष्यते, C प्रचक्षते
598. = *NSK*. 2.35.45 ACD °यत्ताप्रमादिषु, E यत्नाप्रमादिषु
599. Sl. no. A 290, C 280
600. A च for तु
606 Mss. read (wrongly) रोहणे
609. Mss ~संचारी
610. E निर्वचने
611 E दूषणादौ
612. B शिशौ for शशी
613. E °प्रेतौ for °प्रीतौ

पारायणं समासङ्गे कार्त्स्न्ये पारगतावपि ।
615 सरोजिन्यां पुष्करिणी हस्तिन्यां च जलाशये ।
रोमावल्यां शिखरिणी वृत्तभेदरसालयोः ।
स्त्रीरत्ने मल्लिकायां च स्यादुद्गिरणमुज्झये ।
वान्तान्नेऽथ रणारम्भे गोपुरे पुरनिर्गमे ।
घण्टापथे संसरणमसंबाधे चमूगतौ ।
620 भाण्युत्पादे मेघमार्गेमेलाम्बुमलिनाम्बुनोः ।

इति चतुरक्षरणान्ताः ।

परिभाषणमालापे नियमे प्रतिभाषणे ।
निन्दोपलम्भवचने ग्रन्थभेदावलम्भयोः ।
क्रोडीकरणमाश्लेषे आलिङ्गनवराहयोः ।

इति पञ्चाक्षरणान्ताः ।

इति राघवीयंनानार्थमञ्जर्यां टवर्गान्तवर्गः परिसमाप्ताः ।

तः पुंसि कोपे पुच्छे च संभोगे निश्चयेऽपि च ।
625 धातुवादविधौ चोरे प्रकृतार्थे तु त्रिष्वयम् ।
करुणायां तु ता स्त्री स्याद्धातुवादे तदव्ययम् ।
ते क्रीडने चाभिधेये तृट् पिपासेहयोः स्त्रियाम् ।
स्तिरमभे च वितर्के च तुः स्याद्भेदेऽवधारणे ।

इत्येकाक्षरतान्ताः ।

---

614. = AT. 76. 122; cf. AS. 119. 89. MED. 52. 103. E समाम्भते. Mss कास्ने पर(E °रि)गतावपि
615. C सरोजन्यां
617. AD उद्धारणम्, BCE उद्धरणम्. Sl. no.: CD 290
619. ABE चमूगतौ
620. CD मेरू°, E मेल° for मेघ°
623. Col. AD राघवीये (omitting नानार्थमञ्जर्यां). C om. राघवीये
624. E तुच्छे for पुच्छे
625. E त्रयं त्रिषु (by transp.)
626. CE करुणा धनुता स्त्री स्यात् for prior half
627. Mss. °सहये for °सेहयोः. Sl. no. C 295

रीतिः प्रचारे स्यन्दे च प्रकारे लोहकीटके ।
आरकूटे प्रवासे च डिम्बे गमनदुःखयोः । 630
अतिवृष्टावनावृष्टौ शलभे मषिके शुके ।
अत्यासन्ने च राजानश्चाथो जातिस्तु जन्मनि ।
छन्दोऽलङ्कारसामान्यधात्रीगोत्रेषु कीर्तितः ।
पराध्र्यजन्मनि श्रेष्ठे मालत्या स्यादथो रतिः ।
स्मरप्रियायामिच्छाया सुरते क्रीडरागयो । 635
जात स्यादुन्नते वृद्धेऽप्युच्छ्रितोन्नद्धयोरपि ।
रीतिः स्वभावे स्रवणे दृति(?)प्रकृतिसौख्ययो ।
धृतिर्योगे धारणे च मवृद्धौ प्रीतिसौख्ययो ।
प्रज्ञानाध्वरधैर्येषु पुष्टे स्याच्छन्दसि स्त्रियाम् ।
भूतिर्भस्मनि मातङ्गशृङ्गारे जन्मसंपदो । 640
सत्तायामपि वृत्तस्तु वर्तुलेऽतिदृढे पुमान् ।
स्वरूप चरिते पद्ये जीवने वर्तनेऽपि च ।
स्याद्वृत्तिर्नाट्येन्द्रजाले कौशिक्यादिकृषिषु च ।
विचारे स्तम्भने ज्ञाने स्नेहे वर्तनजीवने ।
लो(ला?)भे कवीनां रचनाभेदे क्लीबे तदुच्यते । 645
वित्तं ख्याते धने लब्धे क्लीबे ज्ञाते विचारिते ।
ऋतिर्गतौ जुगुप्साया स्पर्धामङ्गलसाधके ।
गतिर्मार्गणायां(?)च ज्ञाने यात्राभ्युपाययो ।
धूर्त स्यात्खण्डलवणे शठधुर्धुरयोरपि ।

629 Mss दृति (B वृति) for रीति cf notes, B लोहकण्टके
630 A दबे for डम्ब
636 जात is doubtful. B °प्युच्छ्रितो° C °प्युश्रिता° D °प्युच्छितो°
637 ACDE भवणे B श्रवणे for स्रवणे B दूरप्रकृति° AB –सौख्यो SI no ACD 300
633 B om lines 638–9
639 E पुष्टे स्याच्छिरसि स्त्रिया for post half
640 B जव for जन्म-
641 E °यामप्रवृत्तिस्तु corrupt
642 E पत्तने for वर्तने
643 E स्याद्वृत्तिनाट्यद्जालेकौशिक्यादिकृतीपि च corrupt
646 D वित्ते for वित्त BC ख्याते E धाते f r ख्याते A लब्धो
647 Mss read गतिर् for ऋतिर्, see notes ,
648 E मार्गणायां cf notes
649 CE om (hapl ) lines 649–50 AD °दुकुरयोर् for °धुर्धुरयोर्

650 दन्त उन्नतपाषाणे सानौ दष्ट्रनिकुञ्जयोः ।
दन्ती तु वारणे क्रोडे श्वाने व्याघ्रे मृगाधिपे ।
ओषधीनागहेरम्बसोमेष्वप्यथ गौरवे ।
प्रस्तावादौ च सेवाया भक्तिः स्याद्भागपङ्क्त्योः ।
अन्तस्तु भागेऽवसिते रचनाया च तत्परे ।

655 मृतौ निषेवणे रम्ये समाभावग्रमध्ययोः ।
स्वरूपे च समीपे च पुलिङ्गेऽपि प्रकीर्तितः ।
हन्त हर्षेऽनुकम्पाया वाक्यारम्भविषादयोः ।
लिप्तं विषाक्ते भुक्ते च वाच्यवत्स्याद्विलेपिते ।
भ्रान्तिर्भ्रमणमिथ्यानवस्थितास्वथ ब्रह्मणि ।

660 मन्तुर्ज्ञानि मनुष्यापराधयोः स्यात्ततोऽव्ययम् ।
बतामन्त्रणसंतोषखेदानुक्रोशविस्मये ।
हरिद्वर्णविशेषेऽश्वे दिशि तृणदिनेशयोः ।
तिक्तो रसे मदे गन्धे रोहिण्या च कषायके ।
सेतुः स्थलविशेषे स्याज्जलबन्धेऽपि पुंस्ययम् ।

665 हेतिर्ज्वालाशुखड्गेषु तुरङ्गे हेतु चास्त्रियाम् ।
यावत्तावत्परिच्छेदे स्यात्साकल्यनिपातयोः ।
केतुर्ध्वजे द्युतौ श्रेष्ठे ग्रहोत्पाताभिलक्ष्मसु ।
वातं फल्गुन्यरोगे तु स्त्री कृष्या द्यूतदन्तयोः ।
वार्ता वृत्तिजनश्रुत्योस्त्रिष्वप्सु च घृतामृते ।

670 पत्तिः पदातौ पुंसि स्यात्सैन्यभेदे गतौ स्त्रियाम् ।
पङ्क्तिश्छन्दसि वीथ्यां च दशकेऽपि प्रपद्यते ।
स्यात्प्रभावे प्रकरणे धारणे प्रियसौख्ययोः ।

---

650 A वन्त, B क्नत for दन्त, AD -निकुरयो
652 E om च गौ
654 ACDE °स्तमोग
656 Sl. no ACD 310
658 B विपार्ते AD विनेपिते
659. E om भ्रमण and स्व
660. ACD मन्ता, BE ततव्यय
662 C om तृण and E त्रितृण Sl no C 313
667. ABD गृहो°
668 E om धन
671 BC दशनेपि, E कशेपि for दशकेपि BE प्रपद्धते
672 Cf notes E प्रभावो

श्रुतिः श्रोत्रे श्रुते वेदे वार्तायां श्रौतकर्मणि ।
श्रुतं शास्त्रावधृतयोः स्मृतिर्ज्ञानपुराणयोः ।
हस्तो नक्षत्रभेदे स्यात्करेभकरयोरपि । 675
व्यक्तः प्राज्ञेऽपि स्पष्टार्थे प्रपञ्चे विशदे पुमान् ।
व्यक्तिः स्वरे च बीजे च श्रेष्ठे मूर्तौ दृढेऽपि च ।
यन्ता हस्तिपके सूते भर्ता धातरि पोष्टरि ।
पतौ पोतो यानपात्रे शिशौ चापि पुमान्भवेत् ।
मृते प्राण्यन्तरे प्रेतः पार्थिवे तनये सुतः । 680
भूभृद्राजनि शैले स्यादनन्ते कमठेऽपि च ।
ऋतुः स्त्रीकुसुमे हेमन्तादिष्वप्यथ पारदे ।
सूतः स्यात्सूतसारथ्योर्वन्दिसुतूलयोरपि ।
ब्राह्मण्यां क्षत्रियाज्जाते क्षत्ता स्यात्सारथावपि ।
क्षत्रियायां शूद्रजेऽथ शक्तिः प्रभ्वादिषु स्मृतम् । 685
कासूसामर्थ्ययोश्चाथ मूर्तिः काठिन्यकाययोः ।
सातिर्दानेऽवसाने स्यादार्तिश्चापाग्रपीडयोः ।
धातुर्वागादिशब्दोदिगैरिकादिवकादिषु ।
श्लेष्मादिरसरक्तादिभूवादिकनकादिषु ।
महाभूतादि त(स?)द्भावे योनौ च स्यात्पुमानयम् । 690
उदयेऽधिगमे प्राप्तिस्त्रेता त्वग्नित्रये युगे ।
क्षितिर्भूम्या गृहे नाशे द्वयोः स्याद्गुप्ति रक्षणे ।
शौर्ये दीर्णे च भूगर्ते युगपर्याप्तयोः कृतम् ।
फले क्रियाया विहिते हते वाच्यवदिष्यते ।
भूतं क्ष्मादावृते युक्ते प्राण्यतीते समे त्रिषु । 695
पुंसि देवलके प्राप्ते कल्पिते गुह्यकेऽपि च ।

---

673. E om. (hapl.) this line and prior half of the next AD शास्त्रे for श्रोत्रे CD स्वरे for श्रुते
676. Sl. no ACD 320
677 A धूर्ते for मूर्तौ
681. CE शैल for शैले
686. AD शक्तिः for चाथ
689 AB भूपादि (प and व are indistinguishable in G and M scripts)
692 BC भवे
695 ACD प्राण्यातीते, Sl. no CD 330
696. AC दैवलके

न्यायोपमानयोस्तुष्टौ महत्पृथुलपूजयो ।
राज्ये चात शुक्लवर्णे श्वेतं रजतनामयो ।
द्वीपाद्रिकुष्ठकुम्भीषु पुलिङ्गे स्याद्वराटके ।
700 कपर्दिकाया स्त्रीलिङ्गे स्याज्जगद्विष्ठपे पुमान् ।
स्कन्दे वायौ ना जङ्गमे मृगपण्डेऽप्यथ त्रिषु ।
रक्तं नील्यादिरागे स्यादसृक्कुङ्कुमयोरपि ।
भृत्ये वर्णे त्रिषु सित शुक्ले श्वेतेऽर्जुने पुमान् ।
बद्धेऽपि स्त्री शर्कराया कर्पूरे कथ्यते त्रिषु ।
705 शुक्तस्तु परुषे चाम्ले शुक्ति कज्जलभाजने ।
मुक्तासमवपात्रे स्यात्कीर्तिर्यशसि वार्तयो (?)
प्रदेशे कर्दमेऽपि स्याच्छित्ती धवलमञ्चकै ।
सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत् ।
भवान्या तु सती स्त्री स्यात्प्रज्ने तु नपुसकम् ।
710 भास्वान्कान्तिमति सूर्ये वीरत्स्त्री गुल्मवातयो ।
प्रति प्रतिनिधौ वीप्सालक्षणादौ प्रयोगत ।
इति हेतुप्रकरणप्रकाराविसमाप्तिषु ।
स्वस्त्याशी क्षेमपुण्यादौ पक्वे लङ्घनेऽप्यति ।
सकृत्सहैकवारे स्यादारादूरसमीपयो ।
715 प्रतीच्या चरमे पश्चादुताप्यर्थविकल्पयो ।
पुन सदार्थयो शश्वत्साक्षात्प्रत्यक्षतुल्ययो ।
कुतस्तु निह्नवे प्रश्ने पञ्चम्यर्थेषु साधु तत् ।
अलिङ्ग प्रतिशब्दादौ नित्य सूरिभिरीरितम् ।

इति द्व्यक्षरतान्ताः ।

---

697 E तुष्ठौ for तुष्टौ
699 AE द्वीपा°
701 Mss जङ्गमे for नद्गम
703 CE भित्ते for भृत्ये
704 E (by mistake) कूपरे for कपूर
705 Mss (wrongly) पुरुष for परुषे AC चाम्ये for चाम्ले
707 A (before corr ) प्रदेशे AB शीतिर् CD शान्ति for छित्ती
708 A व्यापौ for साधौ
710 BCDE भास्वतती (metrical lengthening)
713 A लापने for लङ्घने
715 Sl no BCD 340
717 E °म्यथ तु for °म्यर्थेषु
718 E ईरित

अमृत वारिसुरयोर्निर्वाणे चातिसुन्दरे ।
अयाचिते यज्ञशेषे पुंसि धन्वन्तरेऽपि च । 720
पीयूषे च घृते दीक्षावाचार्ये विबुधेऽपि च ।
हरीतक्यामामलक्या गळूच्यामपि तत्स्त्रियाम् ।
ग्रथितं गुम्फिताक्रान्तसहितेषु समीरितम् ।
अनन्त शेषविष्ण्वोश्चानवधौ क्लीबमम्बरे ।
स्त्रिया स्याच्छारिवादूर्वाविशल्यालाङ्गलीषु च । 725
हैमवत्या गळूच्या च निशान्तं गृहशान्तयो ।
उष काले नपुंसि स्याद्वनिता जनिता च ते ।
अबलात्यर्थरागेषु क्लीब याचितदुर्गयो ।
स्त्रैणे जलाशये चाथ गोपतिः शंकरे वृषे ।
सूर्यमेघेन्द्रकृष्णेषु षण्डे भर्तरि पार्थिवे । 730
आकृतिस्तु शरीरे स्याद्रूपसामान्ययोरपि ।
समिति· समरे साम्ये सभायामपि च स्त्रियाम् ।
आहतं गुणिते नाट्ये ताडिते च मृषार्थके ।
नववस्त्रेऽङ्गभेदे च नामके चाथ रोहित ।
रुधिरे शक्रधनुषि धीरे वर्णे कुचन्दने । 735
गोशीर्षे च मदे भीमे कुङ्कुमे च ऋजौ तरौ ।
अरित्र्या मीनमृगयो प्रकृति पाञ्चभूतिके ।
प्रधाने कारणे गुह्ये जन्तौ छन्दसि मातरि ।
अमात्ये च स्वभावे च पूजाया परमात्मनि ।
विभूति सगृहीते स्याद्भस्मनि उत्सम्पदो । 740
विविक्त स्यादसंपृक्ते रहस्यूनितपूतयो ।
अव्यक्त शङ्करे विष्णौ क्लीबे तु महदादिके ।
परमात्मन्यात्मनि च त्रिषु स्यादस्फुटेऽजित ।

---

719 E -सरयोर् for -सुरयोर्
720 B धान्व° CE धेन्व° for धन्व°
721 A ऽपे for वि
724 CE -विष्णोन् for -विष्ण्वोश्‍ B अव्यय for अम्बरे
726 B निशात म॰ C निशान्तमं°
727 E om (hapl) lines 727–8 Cf notes.
730 A मृय for सूर्य- B -जालेषु for -कृष्णेषु BCE कर्तरि for भर्तरि
733 E मृता° for मृषा°
735 E नरे for धरे SI no CD 350
737 E °भौतिके for °भूतिके
738 A ऽनाम for जन्तौ
740 A सा गृहीं° C म्यहीं° B छद्- for छन्-
741, CE विविक्ति

अपराजितविष्ण्वीशपरमात्मसु कथ्यते ।
745 मनोज्ञतथ्यसुस्पष्टप्रियवाक्येषु सूनृतः ।
क्लीबं तु मङ्गलेऽपि स्यादुदन्तः साधुवार्तयोः ।
उद्धृते स्याद्विधूतं तु प्रतीतो ज्ञातहृष्टयोः ।
सुकेतुः सुपताकाया यक्षसेनानिवेशयोः ।
प्रवृत्तिस्तु प्रवाहे स्याद्व्यापारे भ्रान्तिवार्तयोः ।
750 मुहूर्तमल्पकाले च घटिकाद्वितयेऽपि च ।
ललितं त्रिषु ना भावभेदे सुन्दरनृत्तयोः ।
अस्त्रियां प्रमदारामे क्रीडिते जातपल्लवे ।
संपातस्तु वशे योगे प्रवेशे वेदसंविदोः ।
आसारे विजनेऽभ्यस्ते याचनाधारणार्थयोः ।
755 पुंसि स्यादुचितं न्याये सीमन्तः केशवेशने ।
स्मार्तकर्मणि सीमान्तः प्रमाणे ग्रामभूमिनाम् ।
किरातो लुब्धके देववाहिनीमत्स्यभेदयोः ।
सरस्वान्नदमानेऽब्धौ कुरुक्षेत्रकुबेरयोः ।
रसिके च विवस्वांस्तु देवतासूर्ययोरपि ।
760 पक्षिमात्रे च गरुडे गरुत्मानथ कीर्तितः ।
जीमूतः पर्वते मेघे शकुन्तो भासपक्षिणो ।
मरुतः पवने देवे स्पृक्कायां तु स्त्रियामपि ।
स्थपतिः कारुभेदे च कञ्चुकिन्यपि वर्तते ।
वृत्तान्तः स्यात्प्रकरणे प्रकारे कार्त्स्न्यवार्तयोः ।
765 आनर्तः समरे नृत्तस्थाननीवृद्विशेषयोः ।
कृतान्तो यमसिद्धान्तदेवाकुशलकर्मसु ।
शुद्धान्तः कक्ष्यभेदे च नृपस्यासर्वगोचरे ।
गुह्ये चान्तःपुरे दृष्टान्तः शास्त्रे च निदर्शने ।

---

745 E सूक्ति for सूनृतः
747. E उन्मते for उद्धृते D विधीत स्व- for विधूत B Mss. प्रतीते B ज्ञातसत्योः. E ज्ञातहृष्टयोः
751. B ललित
753. A -संवदोः
755. Sl. no. CD 360
756. ABD सीमन्त
757. AC °वरिणि. E om. नीम
761. E शाप- for भास-
765 E °नीवृद्धि°
767. ACD कक्ष्ये° B °स्थ- for कक्ष्य-

विस्तारवल्ल्योर्व्रततिः वसती रात्रिवेश्मनोः ।
महती पूजने वीणाभेदे स्यान्नारदस्य तु । 770
जगती छन्दसि भुवि पक्षतिः पक्षमेदयोः ।
मूले हंसमयूरादौ (दि:?) सिकता वालुका अपि ।
आयतिस्तूत्तरे काले स्याद्दीर्घत्वप्रभुत्वयोः ।
बृहती क्षुद्रवार्ताकी छन्दोभेदे महत्यपि ।
वासिता स्त्रीकरिण्योश्च कृतवासे नपुंसकम् । 775
भाविते स्तम्भितेऽपि स्याच्छादिते च त्रिपूच्यते ।
निमित्तं कारणे चिह्ने रजतं हेमरूप्ययोः ।
सिते त्रिपु स्यान्नक्षत्रे हारवारणदन्तयोः ।
संस्कृतं लक्षणोपेते कृत्रिमे च प्रकीर्तितम् ।
निवातस्त्वाश्रयेऽवाते शस्त्राभेद्ये च वर्म यत् । 780
जातोऽद्धप्रवृद्धेषु द्वौ स्यादुच्छ्रूत उत्थितः ।
वृद्धिमत्योद्यतोत्पन्नावा(॰न्नेप्वा)दृतौ सादरार्चितौ ।
लोहितोऽङ्गारके रक्ते विहितं युक्तकर्मणोः ।
अभ्यस्तेऽप्युचितं न्याय्ये तथा परिचितेऽपि च ।
आवर्तः सलिलभ्रान्तौ संभ्रान्तौ तुरगागमे । 785
प्रचेता वरुणे श्रेष्ठे धीमत्यपि च वर्तते ।
उद्धूतोत्तानितेऽपि स्यात्कीलितं बन्धितेऽपुमान् ।
पुरस्तात्प्रथमे प्राच्यां पुरोर्थेऽग्रत इत्यपि ।
अभितः शीघ्रसाकल्योभयता(तो?)भिमुखेषु च ।
समीपे च पुरस्ता(?)द्वावलिङ्गं स्यात्ततः पुमान् । 790
मूर्छितस्तु स मूढे स्यात्सोच्छ्रये च तदीरितम् ।

---

770. After line 770, Mss. ins. (cf. 1 732)
* समितिः सगरे सङ्गे समायां च स्त्रियामपि ।
771. CE जरती. BCE भूमौ for भुवि
773. BCE उत्तर: for उत्तरे Sl. no B 340; CD 370
775. ABD वासिता
776. B om. (hapl.) from छादिते up to त्रिपु (in line 778)
777. E हेम्नि for हेम-
780 E निवासस्त्वाश्रमेवाते for prior half, D दर्भा° for शस्त्रा°
781 स्यात् ungrammatical. ACD उदित°; B उत्थित; E उद्धत
784 Mss उचित(E °ता)न्याये
785. AD °गाहये. BC °गामने (both corrupt) for °गमने; cf notes

मोक्षकारणयोश्वास्था स्थानालम्बनयत्नयोः ।
अपेक्षायां च संस्था तु स्थितौ नाशे चरेऽपि च ।
मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ ।
कथमादौ तथाप्यन्ते यत्ने गौरवबाढयोः ।    815
पथ्या स्त्री स्याद्धरीतक्यां पुंनपुंसकयोर्हिते ।
तीर्थं पात्रे दर्शने च पुण्यक्षेत्रे च पावने ।
योनौ जलावतारे च स्त्रीरजस्यध्वरेऽपि च ।
अष्टादशेऽमात्यसेनापतिपौरोहितेषु च ।
निपानागमयोर्मूले ऋषिजुष्टजले गुरौ ।    820
वीथिः पङ्क्तावम्बगतौ नाट्यभेदे गृहाङ्गणे ।
मार्गे मत्स्यस्तु सानौ स्यान्मानभेदे नपुंसके ।

इति द्व्यक्षरथान्ताः ।

सत्पथं दिवि सन्मार्गे तारमार्गे च विश्रुतम् ।
समर्थस्त्रिषु शक्तिष्ठे संबन्धार्थे हितेऽपि च ।
खण्डार्थं(?) तु समांशे स्याद्व्यवस्था कृत्यनिर्णये ।    825

इति त्र्यक्षरथान्ताः ।

कर्णीरथः प्रवहणे मञ्चे राज्ञां स्वयंवरे ।
दशमीस्थः क्षीणरागे वृद्धे मरणसंशये ।

इति चतुरक्षरथान्ताः ।

दः पुंसि दातरि छेदे दा स्त्रियां क्षान्तिदानयोः ।

---

812. ACDE °योश्वस्थानयत्नयोः°; B °योरवस्था-स्थानल°
813. CE स्थिते for स्थितौ
814. = AK. I, 2329
815. Sl. no. CD 390
817. AD पत्रे
818. CDE मार्ग° for अष्टा°
821. CE वीथिः for वीथिः. A पंक्त°
823. A हारा° for तार°
824. CD स्त्री तु. E शक्ति for त्रिषु B शक्तिस्थे (more correct)
825. A खंडार्थं. cf. notes
82-. ABCD कंठी° for कर्णी°. E प्रवाहे for प्रवहणे
828 = NP. I. 101 E दारक: for दातरि

शुद्धो दूः परितापे स्त्री दुष्टे द्दिः क्षय उच्यते ।
830 दं क्लीबे दानवैराग्यकलत्रेष्ववलोकने ।
मेयलिङ्गस्त्वय मूढे ग्रहान्ते द्रावके शुचौ ।
दर्शनज्ञाननेत्रेषु दृक् स्त्री द्रष्टरि तु त्रिषु ।

इत्येकाक्षरदान्ताः ।

वादी मङ्गलवाद्ये सख्याया वैतालिके ध्वनौ ।
नन्दी वन्दी द्वौ वृषभे वंशज्ञे स्तुतिपाठके ।
835 कन्दस्तु सूरणे सस्ये मूले जलधरेऽपि च ।
छन्दोऽभिप्रायवशयोर्हृद्वाख्याचित्तवित्तयोः ।
उक्तादौ वृत्तशास्त्रे स्याद्वेदे च परिकीर्तितम् ।
स्त्री संविज्ज्ञानसंभाषाक्रियाकाराजिनामसु ।
प्रतिज्ञाया च सकेते तोषणाचारयोरपि ।
840 भेदो द्वैते विशेषे च उपजाते विदारणे ।
मदो रेतसि कस्तूर्या गर्वे हर्षेभदानयोः ।
कृष्णवस्तुनि मद्येऽपि पादः प्रत्यन्तपर्वते ।
तुरीयांशे वृक्षमूले चाशौ चरणभ्रशयोः ।
पूज्ये चाथ पदं शब्दे व्यवसायोपदेशयोः ।
845 वाक्ये पथे पदन्यासे स्थाने स्याद्वाच्यलिङ्गकः ।
त्राणे व्यवसिते चिह्ने वस्तुन्यथ गुणाधिके ।
संपद्भूतौ हारभेदे वैभवे च मदोऽस्त्रियाम् ।
आयुधे धनेदे रोगे पुंसि कृष्णानुजेऽपि च । •
स्वेदस्तु घर्मसलिले अब्दो मेघे च दर्पणे ।

---

829 B दृ. CE दुः for दू
830. B क्षीबे for क्लीबे. CE °लोचने
831 CD गृहांते, E गृहाणे
832. Mss are corrupt
834. AD नन्दिनन्दी C नदिवन्दी E वन्दिनान्दि, E वृषभौ
835. Sl no. CD 400
837. B °कीतित
838 AC -क्रयाकार°
839 AC पोषणा°
842 AB पर्यंत°
843 B -भृंशयो
847 A हारमे* D हार*दे A गतो for गदो
848 After line 848 Mss ins :
* स्वेदुपनिषद्धर्मे वेदान्तेऽपि रहस्यपि ।
(which is an extra line, cf. line 875)

प्रमवादौ पर्वते च शादो जम्बालशष्पयोः। 850
सूदस्तु व्यञ्जने पुंसि हिंसासंहारयोः स्त्रियाम्।
ककुच्छ्रेष्ठे वृषस्याङ्के राजचिन्हेऽपि कीर्तितम्।
स्वादिष्टे मधुरे हृद्ये मृदू चातीक्ष्णकोमलौ।
मन्दः शनौ तामसे च कुण्ठेभस्वैरकारिणोः।
निर्भाग्ये चापटौ पुंसि चाल्पपूरुषमूढयोः। 855

इति द्व्यक्षरदान्ताः।

दायादौ बन्धुतनयौ तमोनुच्चन्द्रसूर्ययोः।
वैश्वानरे च निर्वादो जनवादे च निश्चिते।
वादाभावे चाव्यय स्यादामोदो हर्षगन्धयोः।
गोविन्दः स्यात्सुरगुरौ गोध्याध्यक्षमुकुन्दयोः।
गोष्पदं सेविते माने मतिष्ठाकृत्यमास्पदम्। 860
शारदः सप्तपर्णे स्याच्छरत्कालोद्भवेऽपि च।
लाङ्गल्यां शारदी नव्ये वाण्यां कान्तौ च शारदा।
प्रसादोऽनुग्रहे कार्ये प्राणस्वास्थ्यप्रशान्तिषु।
नैर्मल्यहर्षयोश्चाथ आक्रन्दो दारुणे रणे।
आरावे रोदने त्रातर्यङ्गदो वालिनन्दने। 865
नपुंसि बाहुवलये नर्मदः परिहासके।
नदीभेदे विषादस्तु दुःखे गरलदायके।
विषादी शंकरे दुःखयुक्ते गरलभोजने।
कुमुदः प्लवगाधीशे कैरवेऽपि पुमान्भवेत्।
विनोदः शास्त्रतात्पर्ये परिहासे च धन्वनि। 870
निषादस्तु स्वरे व्याधे त्र्यक्षरं चापि कीर्तितम्।

इति त्र्यक्षरदान्ताः।

---

852. E ˚स्तके. B च स्त्रिया. CE blank for कीर्तितम्. SI no CD 410
855. A निर्भंगे
856 D om. lines 856–71: the entire portion of words of three syllables is missing
858 B वन्दमे E गवाध्यक्षयोः (by transp.)
863. Mss. (D missing) read कार्ये but काम्ये is possible
871. BCE अनुदितस्वरे ख्याते (CE om. it) निषादस्तु स्वरोऽन्त्ये

मेघनादो मेघशब्दे ओषधौ रावणात्मजे ।
मुचुकुन्दो नृपे वृक्षे चापवादस्तु निन्दने ।
आज्ञायां स्यात्परीवादस्तन्त्रीनादापवादयोः ।
875 धर्मे रहस्युपनिषत्सुप्रगल्भौ विशारदौ ।
विनोदबिन्दुः शास्त्राणां तात्पर्यज्ञे च लुब्धके ।
मेलमन्दो मषिघटे मेळामन्दमपि स्मृतम् ।

इति चतुरक्षरदान्ताः ।

धः पुं शिलीभेन्द्रोप्याने श्रीदे धन्वन्तरे घटे ।
धं वेश्मनि धने धान्ये बुधे धीस्तु धियि स्त्रियाम् ।
880 धूर्नां धूपे स्त्री तु कम्पे चित्ते भारे युगाग्रयोः ।
शंभोर्जटायां हेरम्बे धिङ् निर्भर्त्सननिन्दयोः ।

इत्येकाक्षरधान्ताः ।

सिद्धं नित्ये प्रसिद्धे च निष्पन्नापन्नदीक्षिषु ।
गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोः ।
मृत्यौ च सरभेऽपि स्यात्संधिः सङ्गसुरङ्गयोः ।
885 भेदे संघट्टने मोक्षे लाभे नाट्याङ्गहर्षयोः ।
धेनौ स्कन्धे च सिद्धिस्तु योगभेदसुरेड्ययोः ।
सुधा पयसि पीयूषे मूर्वायां स्नुहिलेपयोः ।
गङ्गायामिष्टकायां च साधुः सज्जनयोग्ययोः ।
पात्रे पूज्ये पाचके चामात्ये पूजाविधावपि ।
890 प्रागल्भ्ये धाष्टर्यं क्लीबं धारी वार्धुषिकेऽपि च ।
सिन्धुर्नद्यां नदे स्त्री स्याद्देशभेदेऽम्बुधौ गजे ।

---

873. E नन्दने
876. Mss. transp. lines and 877
877. Col.: ACD इति पञ्चाक्षर°; BE चतुरक्षर°
878. A ध: प्रसिलिन्द्रोप्याने; B ध: प्रसिलिन्भेन्द्रोयाने, CD ध: पुंसिलिन्भेद्रोप्याने; E ध. पुसिलिन्भेद्रो ध्याने (all corrupt for prior half). B संरेच for घटे
879. ACDE बुधो (°धौ?). AD धी तु धिधिः C धीतु धिधि, E धीतुविधिः for धीस्तु धिधि
880. Sl. no. D 423
884. B समरेसयो
885. B भेदे; E लोभे for लाभे
887. AD दूर्वायां for मूर्वायां
888. E सु- for सङ्-
889. AD पालके for पाचके; both readings uncertain
891. CE °भेदे दुग्धजे

मोक्षे समासौ लाभे च पुंसि निष्पत्तियोगयोः ।
मधु मद्ये पुष्परसे वैशाखे माक्षिके गुडे ।
क्षीरे जले दैत्यभेदे मद्यवृक्षविशेषयोः ।
वसन्ते जातिमधुरे जपाकोशे द्वयोरपि । 895
विधुर्विष्णौ चन्द्रमसि कर्पूरे राक्षसेऽपि च ।
विधिर्विधाने नियतौ दैवे काले विधातरि ।
कल्पे नेमौ प्रवृद्धौ स्यात्पश्चाद्भागनितम्बयोः ।
वृद्धिरानन्दने वृद्धौ वर्धनेऽपि कलान्तरे ।
वधूर्जायास्नुषास्त्रीषु प्रियङ्गौ शटिनामनि । 900
स्पृक्कायां च नवोढायां बन्धुर्बन्धूकपुष्पके ।
वल्लभेष्टे भ्रातरि च पुंसि तत्परिकीर्तितः ।
स्निग्धस्तु त्रिषु सान्द्रे च क्लीबे मसृणतेजसोः ।
इद्धं स्याद्दर्पणे कान्तौ मुग्धः सुन्दरमूढयोः ।
सौम्ये नवेऽन्नभेदे चार्धं खण्डे समांशके । 905
बुद्धस्तु सुगते वृद्धः पण्डिते च वयोधिके ।
स्कन्धः समुदये वृक्षे सैन्ये रूपादिपञ्चके ।
समीहने शीर्षभुजप्रकाण्डगमनेष्वपि ।
विधावृद्धिप्रकारेषु गजान्ने वर्तने त्रिधा ।
संधा प्रतिज्ञामर्यादासधानेष्वपि च स्त्रियाम् । 910
स्पृहायां प्रत्यये श्रद्धा स्यादन्धस्तिमिरान्नयोः ।
चक्षुर्हीनेऽप्यलिङ्गः स्यान्मिथोऽन्योन्ये रहस्यपि ।
वृधा निरर्थकाविध्यो (ग्रन्थि?) पर्वण्यनार्जवे ।

इति द्व्यक्षरधान्ताः ।

---

892. Cf. notes. B लेभे for लाभे All Mss. गच्छते- for निष्पत्ति- cf notes
893. E मासिके for माक्षिके
896 AB विधिर् for विधुर्
898. AD कल्पे E प्रभेदे for प्रवृ°
900 B स्नुषा च धा A प्रवर्णे. C प्रवर्णे
905. AD सौम्येऽन्ने
909 AD विधा॰वृ°. C विधावृ°
910. ACD -व्यवाद-
911. ACD रसाय, B रसातय. E रसायन- for °यो
912 C स्पर्श॰. D स्पर्शि A चक्षुर्हीनेऽप्यलि
913 B वृथा A °थक B वर्थ° C प्रथि. ABCE पार्श्वे: D वर्ष्मेव for अनार्जवे

विवधो विषये पुंसि पर्याहारा(रे?)ध्वभारयोः।
915 न्यग्रोधः काष्ठवेण्वोश्च व्यामे वटतरावपि।
विबुधौ सुरविद्वांसावुत्सेधः काय उन्नतौ।
अवधिस्त्ववसाने स्यात्सीम्नि काले बिलेऽपि च।
उपाधिर्धर्मचिन्तायां कैतवेऽपि विशेषणे।
कुटुम्बव्रतवक्रेषु व्याजे पुं प्रणिधिः पुमान्।
920 अतिनिक्षेपचरयोः प्रार्थितेऽथ रथस्थिते।
वरूथो रथगुप्तौ स्यात्तिरोधत्ते(?) विवर्तने।
समाधिर्नियमे स्थाने निपाते च समर्थने।
प्रसिद्धः स्याद्भूषिते च ख्याते तूर्यतृतीयके।
परिधिर्यज्ञियतरोः शाखायामुपसूर्यके।
925 कबन्धोऽस्त्री जले दैत्येऽप्यपमूर्धकलेवरे।

इति त्र्यक्षरधान्ताः।

अवरोधस्तिरोधाने राजदारेषु तद्गृहे।
समुन्नद्धः समुद्धूते पण्डितंमन्यदृप्तयोः।
अनुबन्धः प्रकृत्यादौ दोषोत्पादे विनश्वरे।
मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्तने।
930 अनुबन्धेऽपि हिक्कायां प्रटायामपि कथ्यते।
गजबन्धस्तु सुरते आलाने ग्रहणेऽपि च।
ब्रह्मबन्धुरधिक्षेपे निर्देशेऽथावलम्बने।

---

914. For prior half cf. notes. Mss. read विविध and °हाराध्व°

915. B घट° for वट°

918. E कर्म° for धर्म°

919. ABC –वृत– for –व्रत–. E –वेत्रेषु

920. AD प्रथने, C प्रथने; E प्रार्थने for प्रार्थिते

921. D वरूथो. B –पि वर्तने, CE विवर्तने, D –पि वर्तेने

923. AD तूर्यति°; B तूर्यत° for तूर्यतृ°

924. = ŃSK. 2. 24. 156. VL. 182. 36 ab; ŚĀS. 424 ab, Var. MED. 81. 33.

925. BCE °मूर्ध्नि

926. Mss. °धारेषु (E °तारेषु) for °दारेषु

928. For 928, cf. AK. I. 2531; VL. 183. 43. B दोषोत्पादे

929. = AK. I. 2532, ŚĀS. 65cd; MED. 81. 41 cd

930. AD हिंमायां for हिक्कायां. B मृष्टायाम्

931. CD आलाने.

932. B अभिक्षेपे

अविदूरेऽप्यवष्टब्ध रुन्धे(द्धे?) क्रान्ते तिरस्कृते ।

इति चतुरक्षरधान्ताः ।

नः पुंसि नाभौ हेरम्बे क्लीबे नं ज्ञानवाचयोः ।
सूक्ष्मपथापरिक्लिष्टशून्यभिन्नेषु तत्त्रिषु । 935
धनुःशब्दे स्तुतौ स्त्री स्यान्नौः काले तरणावपि ।
नु पृच्छायां विकल्पे च निर्निश्चयनिषेधयोः ।

इत्येकाक्षरनान्ताः ।

गमने वाहने यानं भिन्नं भिन्ने पृथक्कृते ।
जनस्तु पामरे लोके घनं स्याल्लोहमुद्गरे ।
कांस्ये तालादिके नृत्ते विस्तारेऽभ्रे दृढेऽधिके । 940
सान्द्रे स्त्रियां तु मुस्तायां त्रिषु मूर्तिगुणे भरे ।
दानं गजमदे त्यागे पालनच्छेदवुद्धिषु ।
स्थानं स्थितौ च सादृश्ये संनिवेशावकाशयोः ।
युक्तार्थे कारणार्थे च युद्धनृत्तार्थयोरपि ।
तनुस्तु विरले काये कृशेऽल्पे च क्वचित्त्रिषु । 945
सूनुः सुतेने सहजे वधस्थानोपजिह्वयोः ।
गळशुण्ठिकभेदे च सूनः स्याद्वाच्यलिङ्गकः ।
पुष्पप्रसवयोः क्लीबं स्वप्नः सुप्तस्य संस्मृतौ ।
ननु प्रश्नानुनययोस्तोके संबोधनेऽपि च ।
मानं कोपेऽभिमाने च विमाने मददण्डयोः । 950
शून्ये प्रमाणे प्रस्थादौ पुंसि चित्तोन्नतावपि ।

---

933. Sl. no.: CD 450
934. E मानो for नाभौ
936. CE स्तुते नो for स्तुतौ स्त्री
937. B नुः
940. B कास्यं°: CD ताल°
941. C (before corr.) मुस्थायां
942. A (by metathesis) नाद
944. C om. (hapl.) lines 944-6
945. B विरळे
946. AD वध- (ध and य being indistinguishable in Grantha script)
947. Mss सूते (E सूत्य) for सूनः
948. D स्वप्न.-A संस्मृत
950. After l. 950, all Mss. ins. (cf. lines 954-5)·
*नाम प्रसिद्धे सम्भवनायां नामनि पूजने (AD °के)
951. Mss. °चित्तस्था(E,° स्था)दौ

स्नानीयेऽभिषवे स्नान योनिः स्यात्ताम्रिके पणे ।
स्त्रीणां गुह्ये कारणे च जन्मस्थानेऽपि कीर्तितः ।
नाम क्लीबे नामधेयेऽव्यय स्यादवधारणे ।
955 स्यात्प्रकाशे प्रसिद्धे च क्रोधोपगमकुत्सने ।
भानुर्दिवाकरे रश्म्या ग्रावाणेऽद्रौ पुमान्भवेत् ।
पत्री बाणे पक्षिभेदे वृक्षादौ वाह्ययुक्तके ।
शिखी वह्नौ मयूरे च ओषधौ पर्वते द्विजे ।
कुक्कुटध्वजयोश्चाथ सादी स्यात्सारथावपि ।
960 गजारोहे हयारोहे वाजी तुरगबाणयो ।
विहङ्गेऽथ धृतौ बुद्धिस्वभावब्रह्मवर्ष्मसु ।
यत्ने जीवेन्द्रिये वायौ चात्मा स्यादथ भूपतौ ।
राजा चन्द्रे क्षत्रियेन्द्रे क्षयरोगे पतौ द्रुमे ।
इन सूर्ये प्रभौ पुंसि ब्रह्मा वेदे द्विजेऽपि च ।
965 तत्त्वे तपसि योगेन्द्रौ सूर्ये ब्रह्मणि वेधसि ।
वर्त्म नेत्रच्छदे मार्गे मीनो राशौ झषेऽपि च ।
पक्ष्माक्षिलाम्नि किञ्जल्के तन्त्वाद्यंशेऽप्यणौ गुरौ ।
पर्वस्तु तिथिभेदे स्यादुत्सवे लक्षणान्तरे ।
दर्शप्रतिपदो सधौ विषुवत्प्रभृतावपि ।
970 ग्रन्थिप्रस्तावयोश्चापि वर्ष्म देहप्रमाणयो ।
धाम त्विषि प्रभावे च गृहे देहे च जन्मनि ।
लक्ष्म चिह्ने प्रधाने च रत्नं श्रेष्ठे मणावपि ।
स्वजाते पद्मरागादौ रत्न काननवारिणी ।

---

952 D अभीषवे C ताद्रिक, A पण
954 Sl no C 460 D 461
955 II प्रसिद्धौ
956 Post half corrupt A ग्रमाग
957 CE वाप्यु°
958 AC (orig as text) D आत्मे आश्वे E यतते for पतन
961 E –वर्मसु
962 A यत्ते
965 II om. lines 965-6
967 D °ल इ– (for लाम्नि) ABC तत्त्वाद्यंशे CE मणौ for ऽप्यणौ
968 पत्र तु would be better
969 ACD सन्धौ
970 AD सभे- for ग्रन्थि
971 C प्र.
972 Sl no CD 470
973 ACDE read post half वने सलिल- वारिणि also

हीनन्यूनावूनगर्ह्यौ ज्ञानी सर्वज्ञसौम्ययोः।
दाम रज्जौ राक्षसे च कर्म सत्कृत्यपापयोः। 975
जीवस्थानेऽथावमाने संयोगप्रतिलोमयोः।
स्थाने गतौ चानुशब्दः पश्चात्सादृश्ययोरपि।
पुनरप्रथमे भेदे नूनं तर्केऽर्थनिश्चये।
अनः प्राणयुतेऽपि स्याद्यानानेकोभयार्थयोः।

इति द्व्यक्षरनान्ताः।

भुवनं विष्टपे लोके सलिलेऽपि वियत्यपि। 980
शयनं सुरते निद्राशय्ययोरपि बोधितम्।
मदनः सिक्थके मारे धुर्धूरे शक्रपादपे।
वसन्तशत्रुमूल्येषु कठिनो दुर्जने दृढे।
जीवनं जीविते तोये संदानं दामदानयोः।
लोचनं स्यान्मुकुलिते सुखिते शूपणे दृशि। 985
यत्ने निरूपणेऽपि स्यान्मननं त्ववबोधने।
कर्तनं छेदने प्राह नारीणां तूलसेवने।
शकुनिः पक्षिभेदे च नरभेदेऽपि चेष्यते।
अवनं खण्डने त्राणे गतौ तृप्तौ च याचने।
श्रवणे च क्रियायां च अवाप्तिप्रीतिदीप्तिषु। 990
तलिनं विरले स्तोके स्वच्छे तुच्छेऽपि वाच्यवत्।
तलुनः पावने यूनि स्त्रियां तु तलुनीं विदुः।
अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः।
मातुरेकसुते वृक्षे धवले नयनामये।
तृणभेदे गवि स्त्री स्याच्छ्रयनं लोचने गतौ। 995

975 D राज्ञौ
977. E स्थानौ
979 ACD अन
982. B सीथके D दीरे A दुधूरे, B दुधरे, CE दत्तूरे, D दुधूरे for धुर्धूरे
984. E सतान
986. A यत्ने
987. AD कीर्तन-. Mss कुल° for तूल°

989. A तृप्त तु (corrupt), C तृप्तौ च, D तृप्तं तु
991. D transp स्वच्छे and तुच्छे
992 B तलिनी Sl. no C 480.
993 E ककुन्द
994 D °नामके
995 B कर्ण° for तृण°

स्तम्भने मानभेदे संमाने मत्तनिकृन्तयोः ।
सीमन्तिन्यां मदस्यन्त्यां मानना मानिनी समा ।
वन्दिनी क्षेपणे नग्ने क्षुद्रे प्रेते दिगन्तरे ।
भूतात्मा धातरि तनौ शिखरी तरुशैलयोः । 1025
अपामार्गे हायनस्तु व्रीहिभेदेऽर्चिवर्षयोः ।
वृजिनं कल्मषे क्लीबं क्लेशे ना कुटिले त्रिषु ।
वाहिनी तु स्त्रियां नद्यां सेनायां कीर्तिगुक्कके ।
रजनी नीलिकालाक्षाहरिद्रायामिनीषु च ।
ह्लादिनी वज्रतटिलोः कामिनी योषिति स्त्रियाम् । 1030
श्यामापारावतीचक्रवाकीवन्दासु चेष्यते ।
केतनं तु गृहे कृत्ये ध्वजे चोपनिमन्त्रणे ।
व्यञ्जनं लाञ्छने श्मश्रुनिष्ठानावयवेष्वपि ।
कादिक्षान्तेऽथ राजानां द्यूतलोकापवादयोः ।
कौलीनं स्यात्कुलीनत्वगुह्यजन्यकुकर्मसु । 1035
कौलेयकविहंगाहिपशूनां संगरेऽपि च ।
स्यादुद्यानं निःसरणे वनभेदे प्रयोजने ।
देवनं व्यवहारे च द्युतौ मोदे मदेऽपि च ।
स्तुतौ च विजिगीषायां क्रीडास्वप्नगतिष्वपि ।
उत्थानं पौरुषे तन्त्रे संनिविष्टोद्गमे मुदि । 1040
मलत्यागे समाप्तौ च व्युत्थानं वैरपूजयोः ।
समाधौ च निवृत्तौ च प्रतिरोधेऽथ मारणे ।
साधनं मृतसंस्कारे गतौ द्रव्येऽर्थदापने ।
निर्वर्तनोपकरणानुव्रज्यासु च मेहने ।
चिह्ने सैन्ये च करणे व्यसनं किल्बिषेऽशुभे । 1045
निष्फलोद्यमने सक्तौ दोषे भ्रंशे विपद्यपि ।

---

1022. B विरंभने मानभेदे साने मर्तनि° (sic)
1023. E मनना मनिनी
1025. AD गतौ for तनौ
1027. B कलुषे for कल्मषे
1032. BC भ्रदे
1033. B लाछन-; C लंछनं-. Sl. no. C 500
1035. E कुलिनं
1036. DE -विहंगादि-
1040. E संथानं for उत्थानं. A मुदा; BCDE मुदे for मुदि
1044. AD निवृत्तनो°; C निर्वृत्तनो°; E निर्वृत्यो°. AC -वृज्यासु

कामजे कोपजे चाथ मैथुनं संगतौ रतौ ।
मिथुनं राशिभेदे स्याद्युग स्त्रीपुंसयोमयोः ।
कौपीनं चीरखण्डे स्याद्गुह्ये कार्यें तदिष्यते ।
1050 प्रसूनं पुष्पफलयोः प्रज्ञानं बुद्धिचिह्नयोः ।
क्रन्दने रोदनाह्वाने संस्थानं तु चतुष्पथे ।
सन्निवेशे च मृत्यौ स्यादाकृतौ केतनेऽपि च ।
समानो वायुभेदे च समे चैके च सज्जने ।
तरस्वी वेगिनि शूरे वृद्धौ छेदे च वर्धनः ।
1055 आसनं तु गजस्कन्धे पीठेऽपि च नपुंसके ।

इति त्र्यक्षरनान्ताः ।

वैरोचनस्तु सुगते बलिकर्णाग्रमेषु च ।
शनौ विरोचनस्तु स्यात्प्रह्लादतनयार्कयोः ।
अग्नौ चन्द्रे च कान्तौ स्यादथ नेत्रे विलोचनः ।
अन्धके विषये क्लीबे अभिज्ञान स्मृतावपि ।
1060 गर्वे ज्ञाने च हिंसाया प्रणवे च समीरितम् ।
उपासनं शराभ्यासे शुश्रूषाया च हिंसने ।
अग्रजन्मा द्विजे ज्येष्ठभ्रातरि ब्रह्मणि स्मृतम् ।
निबन्धनं तु ससर्गे हेतौ सयमनेऽपि च ।
कौतुके चानुरागे च लक्ष्येऽभिज्ञान उच्यते ।
1065 उपधानं विशेषे स्याद्गडुके प्रणयेऽपि च ।
रसायनं विहङ्गे स्याद्व्याधीना च कृतौषधे ।
प्रतियत्नस्तु सस्कारे चोपग्रहणलिप्सयोः ।
शक्रघातुकमत्तेभनीरदेषु घनाघनः ।
निर्यातनं वैरशुद्धौ दाने न्यासार्पणेऽपि च ।

---

1047. E कर्मजे for कामजे
1048. ABCD युम for युग
1049 D °दुष्यते for °दिष्यते
1053. C सर्जने
1054 CD वेगिनी metrical lengthening
1055. B नपुंसके
1060 B प्रणये for °वे
1061 AC °सना A मिदने for हिंसने
1062 श्रेष्ठ° for ज्येष्ठ°
1064. AC लक्ष्ये B ल°
1069. ACDE नौकयो

संपिधानं तु वस्त्रे चाच्छादनेऽपि प्रकीर्तितम् । 1070
आराधनं साधने स्याद्‌वासो तोषणेऽपि च ।
अधिष्ठानं चक्रपुरप्रभावाध्यासनेष्वपि ।
अभिपन्नोऽपराद्धेऽभिग्रस्ते व्यापद्गतावपि ।
विश्वकर्मा दिनकरे सुरशिल्पिनि पुस्त्ययम् ।
महासेनस्तु सेनान्या षण्मुखे वासवेऽपि च । 1075
दुःशासनस्तु दुर्दण्डे सुयोधनसुते पुमान् ।
विकर्तनश्चोद्दलने मार्तण्डे नृपतावपि ।
संकेतनं लालने च सङ्गाध्वजगृहेषु च ।
आतञ्चनं प्रतीवापे जवनाप्यायनार्थयोः ।
आलोचनं दर्शने स्याद्यतिबुद्ध्या निरीक्षणे । 1080
विष्वक्सेनोऽच्युतः पुंसि पृष्टिगन्धफलिन्ययोः ।

इति चतुरक्षरनान्ता ।

इन्द्रे तु गोत्रोद्दलनः कुलघ्ने गिरिदारणे ।
लाक्षाया च हरिद्राया फलिन्या वरवर्णिनी ।
स्त्रीरत्ने रोचनेऽपि स्यादुपस्पर्शनमुच्यते ।
स्पर्शे स्नानाचमनयोश्छादने त्वपवारणम् । 1085

इति राघवीयनानार्थमञ्जर्यां तवर्गान्तवर्गः परिसमाप्तः ।

प॰ पुमान्पचने शैले प्रकाशे कौस्तुभे क्षणे ।
शुभलग्ने च प क्लीबे हेम्नि पाः पातृपानयोः ।
स्यात्स्त्रियामम्बुधाराया सुधाया समितावपि ।
पुंस्त्रिष्वार्ते भपन्ने च पूः स्त्री पुरशरीरयोः ।

---

1070 BE सविधान
1072. E, च कर्पूर- for चक्रपुर- AD -प्रभावध्या°
1075 AC महासनस्तु
1077 BC ° तनोद्वेल्ने च E °तनेद्वेल्ने च
1080 BCE पत्र for यति- Mss read wrongly after this line चतुरक्षरनोन्ता
1081 AB -गन्ट फलिन्ययो is a wrong form
1085 Col D om राघवायनानार्थमञ्जर्या, E om परिसमाप्ता
1087. AD पत्र° BCE पात्र° for पातृ°
1089 पु स्त्रिष्वा°

1090 पूर्णे चाथ पुंशब्द पुरुषे परमात्मनि।

इत्येकाक्षरपान्ता ।

रूपं शब्दे पशौ श्लोके ग्रन्थावृत्तौ सितादिषु।
सौन्दर्ये च स्वभावे च मृगे स्थाने च नाविके।
आकारवपुषोश्चाथ गोपो गोष्ठपतौ शिवे।
ग्रामौघकृतकोटेषु(?) वल्लभाभ्धीन्दुराजसु।
1095 गोपी गोपालमहिलाशारिवाराक्षिकासु च।
कल्पः स्यात्प्रलये न्याये शास्त्रे ब्रह्मदिने विधौ।
क्षेपो विलम्बे निन्दाया बाष्पो नेत्रजलोष्मणो ।
नीपः कदम्बे निम्बाया पुलके च हरिप्रिये।
अन्ववायप्रभेदे स्यादपि प्रश्नविरोधयो ।
1100 सभावनाया गर्हाया समुच्चयवितर्कयो ।
तल्पं शय्याट्टदारेषु पाप कुत्सेपदर्थयो ।

इति द्व्यक्षरपान्ता ।

कलापो भूषणे बर्हे तूणीरे सहतावपि।
आच्छादनेऽन्ने कशिपुरालापः परिचिन्तने।
वृक्षस्कन्धोर्ध्वशाखाया तृणगुच्छे द्रुविस्तृतौ।
1105 पल्लवे विटपुरुषे च विटप पुनपुसकम्।
सुकृपा मञ्जुकुधयोर्यद्यपीत्यवधारणे।
कच्छपी कूर्मयोषाया वीणाभेदेऽपि च स्त्रियाम्।

इति त्र्यक्षरपान्ता ।

अवलेपस्तु गर्वे स्याल्लेपने दूषणेऽपि च।

---

1091 B रूप B शब्दे for श्लोके A पशौ BD पशौ C पशौ E पशे for ग्रन्था-
1092 E मृग-
1094 Prior half corrupt
1097 D निद्राया for निन्दाया
1099 D अन्ववाद-
1101 A तल्प
1102 E (by metathesis) कयाले for कलाया BCE सहेतेपि च
1104 A द्रुविस्तृतौ C द्रुविस्तृतौ E द्रुविस्तृतौ
1105 AD °पुमक
1108 AD स्पर्शने

वित्ताधिपः कुबेरे स्यात्प्रभौ धानिकयक्षयोः ।
परिवापः परिच्छेदे पर्याप्तौ सलिलस्थितौ । 1110
वृषाकपिः शिवे विष्णौ जिष्णावग्नावलिनीं पुमान् ।
प्राप्तरूपाभिरूपौ द्वौ विद्वासे सुन्दरेऽपि च ।
वंशदीपो यष्टिदीपे परिधापी तु वत्सरे ।

इति चतुरक्षरपान्ताः ।

स्फो जत्र्वानिल आस्फोटे फूत्कारे वारणेऽपि च ।
फा स्त्रियां निष्ठुरोक्तौ च कलाकेलीकुटीषु च । 1115
अथ स्फारे परोक्षे च फः शब्दो वाच्यलिङ्गकः ।

इत्येकाक्षरफान्ताः ।

शिफा तरुजटायां च शाखामांसीनदीषु च ।
शफं तरूणां मूले च गवादीनां खुरेऽपि च ।
रेफः शब्दे रवर्णे स्यादधमे क्षयकामयोः ।
कफः श्लेष्मे कफी तु स्यात्श्लेष्मलेऽपि पुमान्भवेत् । 1120

इति द्व्यक्षरफान्ताः । त्र्यक्षराद्यप्रसिद्धम् ।

बः कुम्भे वरुणे बिन्दौ विकले च गुरौ मदे ।
विभूतिकारे कलहे पक्षे गर्भे च पर्वणि ।
वा स्त्रिया कुहलीवल्लीशृङ्खलास्वमले त्रिषु ।

इत्येकाक्षरबान्ताः ।

निम्बस्तु पिचुमन्दे च पारिभद्रतरावपि ।
बिम्बोऽस्त्री मण्डले सोमसूर्ययोर्मुखलक्ष्मणोः । 1125
प्रतिबिम्बे प्रतिकृतौ स्त्रिया स्याद्बिम्बिकाफले ।
शुम्बः स्यान्मुसलाग्रस्थलोहमण्डलके पवौ ।
शुमान्विते शुंभयौ च कम्बुर्वलयशङ्खयोः ।

---

1114 A फङ्गे, B फट्टणे, C फटकणे D फण्ड्रणे; E फड्डणे for फूत्कारे
1117. A शा*मासि-; B शाखिमास-, CDE शाखामासि-
1120 B शुम्पले the rest शप्मले for श्लेष्मले. ACD मप. E मव for भवेत्. Col AD °सिद्ध, CE °सिद्धः
1122 B गर्वे for गर्भे
1124 A transp lines 1124 and 1125 BCE read l 1124 after 1132 (wrongly) CE पारिभद्रे

क्लीबं नपुंसके षण्डे वाच्यलिङ्गमविक्रमे ।

इति द्व्यक्षरबान्ताः ।

1130 कादम्बः कलहंसेक्ष्वोर्द्विजिह्वे मार्गणेऽपि च ।
कदम्बः पुंसि नीपे स्यात्तिनिशे वरुणद्रुमे ।
धूल्या समूहे गन्धे च विडम्बस्त्वागनिन्दयोः ।
नितम्बः पश्चिमश्रोणीभागेऽद्रिकटकेऽपि च ।

इति त्र्यक्षरबान्ताः । चतुरक्षरमप्रसिद्धम् ।

भः शम्भौ भ्रमरे भावे शुक्रेंऽशे जलदे पुमान् ।
1135 भा भुव्यलंकृतौ दीप्तौ स्त्रिया भाः किरणे द्युतौ ।
भं क्लीबे गगने राशौ नक्षत्रे च सुदर्शने ।
भीः स्त्री भीत्या खगे पुंसि स्थानभूम्योस्तु भूः स्त्रियाम् ।

इत्येकाक्षरभान्ताः ।

जम्भो दैत्यान्तरे दम्भे जम्बीरे भक्षणेऽपि च ।
कुम्भः स्यात्कुम्भकर्णस्य पुत्रे वेश्यापतौ घटे ।
1140 गुग्गुलौ गजमूर्धांशे राशौ त्रिवृतमानयोः ।
कुम्भीभपाटलावारिपर्णीपिठरकट्फले ।
शिशुबालिशयोर्डिम्भः स्तम्भस्तु स्थूणजाड्ययोः ।
निश्चेष्टालानकाष्ठेषु शम्भुर्ब्रह्मेशविष्णुषु ।
गर्भोऽपवरकेऽन्तःस्थे सुते नभे च कन्दरे ।
1145 कुक्षौ कुक्षिस्थजन्तौ च भ्रूणे पनसकण्टके ।
शुम्भो दैत्ये बालके च नाभिः प्राण्यङ्गजे पुमान् ।
क्षत्रिये मध्यकोष्ठे च शृङ्गारतचक्रवर्तिनोः ।
क्षेत्रे प्रधाने चक्रस्य मध्ये कस्तूरिकामदे ।
सभा संसदि सभ्येन्दीवरसामाजिकेष्वपि ।
1150 द्यूते दुरोदरे कान्तियुक्ते त्रिष्वपि विश्रुतम् ।

---

1131 B तिमिरे CE तिनीशे D तिनिमिरे
1132 After l 1132 BCE read l 1124
1133 ABE दिकटके
1137. A om. l 1137 with foll col
1140. E स्थुर- for त्रिवृ-
1141 Prior half is corrupt in E C -पीठर- D -पाठर- for -पिठर-
1144 E प्रवरके
1147 B शृङ्गारथ्, C शृङ्गारतर् for °रत-
1148 D करतूरका मता
1150. AC कान्तियुक्ते

कदल्यप्सरसो रम्भा शोभा स्त्री कान्तिरागयोः ।

इति द्व्यक्षरमान्ताः ।

कौस्तुभः स्याद्देवमणौ कण्ठावर्तेऽपि वाजिनाम् ।
आलम्भमवसाने च कलभः करिपोतके ।
अङ्गलेपनवस्तूना विशेषेऽपि पुमान्भवेत् ।
सुरभिश्चम्पके स्वर्णे जातीफलवसन्तयो. । 1155
गन्धोपले कामधेनौ सल्लकीमातृभेदयो. ।
सुगन्धे च मनोज्ञे च विद्वासे घ्राणतर्पणे ।
विष्कम्भो योगभेदे स्यात्संरम्भः सम्भ्रमे क्रुधि ।
ककुभस्त्विन्द्रवृक्षे स्याद्दिक्षु पक्षिण्यपि द्वयोः ।
आरम्भस्तु त्वरायां च दर्पे चोद्यमने वधे । 1160
शरभः शलभे चाष्टपादे वनमृगान्तरे ।
वल्लभो दयितेऽध्यक्षे पतौ सर्वकलावति ।
अतिप्रीतेऽतिसौन्दर्ये कुलीनेऽश्वे मनोहरे ।
प्रधानेऽल्पे च वीरेऽथ प्रणये चापि हिंसने ।
विस्रम्भः केकि( लि? )कलहे विश्वासे च प्रकीर्तितः । 1165
दुन्दुभिर्दैत्यभेदे च वाद्ये वर्षे त्रिकद्वये ।
कुसुम्भं सोमनि क्लीबे स्यान्महारजने घटे ।
सन्निभं तु समीपे च पुंसि वा साम्यवस्तुनि ।

इति त्र्यक्षरमान्ता. ।

अवष्टम्भः सुवर्णे च स्तम्भप्रारम्भयोरपि ।

इति चतुरक्षरमान्ताः ।

---

1151 BCE °रागयो
1152 BCE कर्णावर्ते
1153 II आरंभम् CD कलभ.
1155 E स्वर्गे for स्वर्णे
1156 AC सल्यकी- E -भात्र- for -मातृ-
1157 E विदुषि (on marg sec m)
1158 E om from क्रुधि up to the end of line 1165
1159 E om 1 1159 C स्यादिशु
1167 CE सोमनी D सोमिनी BD °रजते
1168 E °वस्तुनि
1169 II स्यात् for च D स्तम्भप्रारम्भयोर्दिर

1170 मः शंभौ धातरीन्द्रे च चन्द्रे मासे च पुंस्ययम्।
मा स्त्री माने मृतौ वेलामेधापञ्चासु च स्त्रियाम्।
अव्ययं प्रतिषेधे च जने तु स्यान्नपुंसकम्।
मुः पुंसि बन्धनेऽपि स्यात्पिङ्गलाभिधवर्णयोः।

इत्येकाक्षरमान्ताः।

दमस्तु दमथे दण्डे कर्दमे दमनेऽपि च।
1175 क्रमः शक्तौ परीपाट्यां रीत्यां चलनकम्पयोः।
ग्रन्थे च पादक्षेपे च पर्याये च पराक्रमे।
क्षेमं स्यान्मङ्गले लब्धे क्षेमः कुशलचोरयोः।
क्षेमा द(ध)नहरीगौर्योः क्षमः पुंसि क्षमान्विते।
क्षमा धरित्रीक्षान्त्योः स्त्री युक्ते शक्ते हिते सहे।
1180 युक्तादौ वाच्यलिङ्गः स्यात्कामः काम्ये मनोभवे।
इच्छायां रेतसि क्लीबे निकामे व्यसनेऽव्ययम्।
रागाभ्यनुज्ञयोश्चापि त्रिषु श्यामस्तु मेचके।
हरित्प्रयागान्यग्रोधवटवृद्धेषु दारके।
मारे शुके पिके कृष्णे मरीचे लवणे नपुम्।
1185 अप्रसूताङ्गनायां स्त्री सोमवल्ल्यां महौषधौ।
कृष्णाप्रियङ्ग्वोर्गुन्द्रायां निशाशारिबयोरपि।
नील्यां शोभात्रिवृतयोस्तृणभेदेऽपि कथ्यते।
भामः क्रोधे रवौ दीप्तौ नरकग्रहभेदयोः।
धर्मः पुण्ये यमे न्याये स्वभावाचारयोः क्रतौ।

---

1172-3. =var. *NR*. I. 176
1173. E मः for मुः
1174. A (wrongly) मदस्तु. E दमने for °थे. Mss. read मदने for दमने
1176. E गृध्रे for ग्रन्थे
1177. ACE लक्ष्मे; D लक्ष्म for क्षेमः
1178. B दनुहरी. Mss. (wrongly) क्षेमः for क्षमः
1179. B सखे for सहे
1180. E °लिङ्गस्य for °लिङ्गः स्यात्. E काय for कामः
1182. BCE चाथ for चापि
1184. E शुक्रे for शुके
1185. A महौषधं
1186. B °प्रियंगोः; CE °प्रियंगो. AD चंद्रायां; E चंद्रायां. Mss. निशिरा (E ° शि शा)-रिबयोर्
1188. Mss. (except D) भीमः for भामः; cf. notes
1189. E धर्मे for यमे. (ध and य are often being confused in Grantha Script)

उपमायामहिंसायां भावे चापे च यज्वनि । 1190
स्वरेपूपनिषद्द्राङ्गोर्वामं सव्येऽतिसुन्दरे ।
प्रतीपे द्रविणे पुंसि वामस्थे रम्यचक्रयोः ।
गर्हिते योषिति हरे वामी तु वडवासृजोः ।
रासभीकरभीभृङ्गेष्वथ सोमो धनाधिपे ।
दिव्यौषधौ श्यामलताचन्द्रयोर्वासरे जले । 1195
वसुभेदे च कर्पूरे समे स्त्री योषितीति च (?) ।
स्यात्पद्मा लाञ्छनेऽभिख्याविघ्योर्लोकेश्वरार्कयोः ।
धनदे च सरस्वत्यां तारालक्ष्म्योश्च वाच्यवत् ।
पद्मं स्यात्पद्मकव्यूहे निधौ संख्यान्तरेऽम्बुजे ।
ऊर्मिस्तरङ्गे पीडायां वेगे मङ्गप्रकाशयोः । 1200
उत्कण्ठवस्त्रसंकोचरेखेषु परिचक्ष्यते ।
लक्ष्मीः संपत्कान्तिरमारूपभेदप्रियङ्गुषु ।
रामो मनोज्ञे शरभे जामदग्न्यौ( ग्न्ये?) बले सिते ।
त्रिषु नीले राघवे च परशौ रमणेऽपि च ।
क्लीबे तु वास्तौ कुष्ठे स्त्री स्याद्रमार्या च योषिति । 1205
शुष्मा तेजोर्कयोः पुंसि शुष्मं क्षीरे नभस्यपि ।
पद्मके बिन्दुजाले च पद्मा मार्ङ्गीश्रियोरपि ।
भ्रमोऽम्बुनिर्गमे भ्रान्तौ कान्ताख्ये शिल्पयन्त्रके ।
भीमो भये भीमसेने भ्रूक्ष्ममध्यात्मदभ्रयोः ।
श्रमोऽभ्यास उपाये च सूर्मिः स्यात्सालभञ्जिके । 1210
यमः कृतान्ते यमने युग्मजाते हिते त्रिषु ।
आनृशंस्यक्षमासत्याहिंसार्जवक्षमेषु च ।
ज्ञानप्रसादमाधुर्यमार्दवे पुनपुंसकम् ।

---

1190 CE मवे for भावे
1191. BCE स्वरे सुपनिषद्द्राङ्गोर् (E °द्राङ्गे)
1193. B °वासयो
1194. B रसमी-; E (by metathesis) सारभी AD-शृङ्गेषु AD सोसो for °मो
1195. *Post. half corrupt*
1197. D पद्म. BC-विघ्योर् ; E-विध्यो
1201. E °चक्षते
1205 B वास्तौ. D वास्तु
1207 CE ऽपि for च. A मागी. BD मागी, C मागु-; E मगो for मार्ङ्गी-
1211. B युग्मे for युग्म-
1212. D अनृशस्-

आमोऽपक्के रोगभेदे समस्तक्राटकार्थयोः (?) ।
1215 यामो दिनस्याष्टमांशे श्वाङ्क्षे संयमनेऽपि च ।
घर्मः स्यादातपे ग्रीष्मे प्रवर्ग्ये देवतान्तरे ।
किरणे प्रग्रहे रश्मिर्ग्रामः शब्दादिवृन्दयोः ।
षड्जादौ स्यात्सवसथे चाथ सेनामुखे रुजि ।
स्तम्बेऽपि गहने गुल्म ऊष्म स्वेदाम्भसोरपि ।
1220 धाम कान्त्यामथालये जामी स्वसृकुलस्त्रियोः ।
जिह्मस्तु कुटिले मन्दे रसनाया तु तत्स्त्रियाम् ।
न पुंसि कपटे वक्रे सिंहः श्रेष्ठमृगेन्द्रयोः ।
अमा सह समीपे च सामि त्वर्धे जुगुप्सने ।
नाम प्रकाश्यसभाव्यक्रोधोपगमकुत्सने ।

इति द्व्यक्षरमान्ताः ।

1225 ललाम च ललामं च भूषाप्राधान्यवाजिषु ।
विह्नभावपुण्ड्रेषु पुच्छे कान्तौ त्रिषु ध्वजे ।
शृङ्गे च पुरुषश्रेष्ठे मध्यमस्तु त्रिलिङ्गके ।
मध्यदेशे स्वरे रात्रौ छन्दोभेदेऽन्तरे नले ।
अङ्गुली कर्णिकाया च तथा हहरज स्त्रियाम् ।
1230 सत्तमश्चान्यवत्पूज्ये श्रेष्ठसाधीयसोरपि ।
नियमो यन्त्रणाया च प्रतिज्ञाया च सयमे ।
शौचाध्वरतपःसत्यस्वाध्यायेषु व्रतेऽपि च ।
उपस्थनिग्रहे स्नाने पुंसि मौनोपवासयोः ।
कुट्टिमं बद्धभूमौ स्याद्विभ्रमो भ्रान्तिशोभयोः ।

---

*1214 E क्रमो for आमो The post half corrupt BE तक्राटकार्य(E °स्य)यो
1217 D भ्रामा , E भ्राम-
1218 E सु- for स-
1220 ACDE धामा
1222 A कवटे (व and प indistinguishable in Grantha) D क पटे C वक्रे for वक्रे E नपुंसके पटे वक्रे for prior half
1223 C सामी त्वर्थे E सामीप्यर्थे
1225 E रुलामश्च for °म च
1226 E हिम- for विह्न-
1227 CE पुरुषे for °ष-
1228 नले is not traceable
1229 A कर्णिकाया

संशये भवसौन्दर्यविलासेषु प्रकीर्तितः । 1235
निगमोऽस्त्री पुरे वेदे वाणिज्ये च वणिग्धने ।
नैगमो नागरे वैश्ये पुंसि स्याच्छ्रौतकर्मणि ।
परमः स्यात्प्रधानाद्योरोंकारेऽपि पुरातने ।
अनुज्ञाने च कुसुमं नेत्ररोगे फले सुमे ।
स्त्रीणां रजस्यथो तल्पे ता(च)न्द्रमासे वितानके । 1240
कुट्टिमे तलिमं मोक्तं सुषमा परमद्युतौ ।
सुषीमः शिशिरे चारौ सुषिरे पन्नगान्तरे ।
सुषमं चारुसमयोरजिह्मः सत्कृतावृजौ ।
व्यायामो मानभेदे स्याद्दीर्घव्यापारयोः कृतौ ।
आगमः शास्त्रभेदे स्यात्कल्पागमनयोरपि । 1245
अधमः कुत्सिते न्यूने अधःस्थध्मानयोरपि ।
विक्रमः स्याद्वर्षभेदे चाक्रान्तौ च पराक्रमे ।
पूर्वे तिथौ च प्रथमः सुकर्म पुण्ययोगयोः ।

इति त्र्यक्षरमान्ताः ।

परिणामस्तु संतोषे वार्धिके नमनेऽपि च ।
सार्वभौमो दिग्गजे च चक्रवर्तिनिशीशयोः । 1250
प्लवंगमः कपौ भेके शौर्योद्योगी पराक्रमी ।
उपक्रमश्चिकित्सायां प्रारम्भे विक्रमेऽपि च ।
उपायपूर्वोपधासु वत्सरेऽपि इहैषमः ।
जीर्णे च परिभुक्ते च यातयामं प्रकीर्तितम् ।
अथ प्रियङ्गुश्यामा स्यात्स्त्रियामसुरयोषिति । 1255

इति चतुरक्षरमान्ताः ।

इति राघवीयनानार्थमञ्जर्यां पवर्गान्तवर्गाः परिसमाप्ताः ।

---

1236. A खेदे (ब and [illegible] are indistinguishable). E -जने for -धने

1240. E तंदिमासे; चन्द्रहासे in *NR*. I. 1804

1241. CD तल्पिन. Mss. सुषुना

1242. Mss. सुषुनः for सुषीमः

1243. ACE सुषुमं. AD °तावृनी; B °तो रजौ; C °तो कनौ, E °तो रणौ for °तावृजौ

1246. A अधस्ताध्मान°; B अधस्तध्मान°; D अधस्ताध्मान°

1247. E वन्द्- for वर्ष-

1248. ACD सुकर्ण

यत्याने निलये वायौ यामे दातरि यातरि ।
या स्त्रियां यानमञ्जर्योः शोभालक्ष्म्योश्च निर्मितौ ।
त्रिषु स्यात्सर्वनामाख्ये व्यये हेतावथो स्त्रियाम् ।
ख्या ख्यातौ च प्रकथने ज्या मौर्वीमातृभूमिषु ।
1260 द्यौर्ना दिव्यह्नि वह्नौ च स्वर्व्योम्नोः पुंसि च स्त्रियाम् ।

इत्येकाक्षरयान्ताः ।

संध्या तु कालभेदे स्याद्व्यवहारात्मनोरपि ।
काव्यासुरस्त्रियां स्त्री स्यात्पुंसि रामायणादिषु ।
स्मयो बले प्रवत्से च दर्पशौण्डीर्ययोरपि ।
मृत्युः किंपाकमरणलक्षणेषु यमेऽपि च ।
1265 नयो नीत्यां पट्टवर्णे(?) वेध्यं लक्ष्येऽपि कीर्तितम् ।
चित्यं चैत्यं चिताकल्प्योरुद्देशे द्वौ सुरालये ।
सख्य युद्धे हस्तिबिन्द्वोर्निधिव्यूहान्तरादिषु ।
गणनाया वयो यूनि कथ्योद्गमकथार्हयोः ।
कक्ष्या वैकक्ष्यके काञ्च्या रज्जौ मध्येभबन्धने ।
1270 हर्म्यादेश्च प्रकोष्ठे च स्त्रियां बृहतिकाच्छयोः ।
वरत्रायां क्षयस्तु स्याच्छयालौ सुखहस्तयोः ।
भुजगमेऽपि शय्याया दायो विते च यौतके ।
भाषणे सोल्लुण्ठने च विभक्तव्यापितुर्धने ।
जनितव्ये रणे क्लीबेऽपवादजनजल्पयोः ।
1275 अस्त्री वरवधूज्ञातिप्रियतुल्यहितेषु च ।
जन्यस्त्रिषु जने साधौ जनितोत्पादनीययोः ।
जन्या तु मातृसख्यां च मदे हृष्टे जनेऽपि च ।

---

1257. = var. *NR*. I.131
1258. Mss. श्यो(E अयो) for अये. cf notes
1259-60 are omited in A
1260 BC दिव्यग्नि
1263 E दक्ष- for दर्प-
1265. Prior half corrupt Mss. नित्य for नीत्यां. B पट्टवर्के, D पट्टवर्णे, E पक्वर्णे
1266. E सुरालये
1271 D वरत्राया; E वरित्राया. ABD सुखि- for सुख-
1274 A °जनकल्पयो., D °मनकाल्पयोः
1275. B om. ll 1275-6. Mss. पर- for वर-
1277. B मुदे for मदे

लोके जन्तावथो वीर्यं प्रभावे शुक्रतेजसोः ।
सामर्थ्येऽपि च गुह्यं तु योनौ रहसिदम्भयोः ।
कूर्मे, शैलान्तरारोग्यसोढव्येषु नपुंसकम् । 1280
पुंसि स्यादङ्गभेदे च कुमार्गेऽस्वैरिपक्षयोः ।
स्त्रियां तु शाखानगरे छेकरूपितयोरपि ।
सत्यं तु शपथे तथ्ये साधुसप्तमलोकयोः ।
चोद्यं तु चोदनार्हे स्यादद्भुतेऽपि च तत्त्रिपु ।
पद्यः शूद्रे पुंनपुंसि सृतौ श्लोकेऽपि गद्यते । 1285
भव्यं सत्ये शुभेऽरोगे कर्मरङ्गतरौ स्त्रियाम् ।
शुद्धे करिकणायां च मेयवद्योग्यभाविनोः ।
छाया स्त्री सूर्यभार्यायां प्रतिबिम्बे अनातपे ।
पालनोत्कोचयोः कान्तिसच्छोभाकान्त्यपङ्क्तिषु ।
मध्यस्तु मध्यभागेऽल्पेऽवलग्नोपरिदेशयोः । 1290
न्याय्येऽपि भायस्तुल्ये च बाहौ मृत्यौ क्षये मृते ।
वयस्यनशने भूम्नि पण्यं विक्रयवस्तुनि ।
अद्दे च व्यभिचारे च पुण्यं धर्ममनोज्ञयोः ।
कृत्या क्रियादेवतयोः कुत्सिते कीर्त्यते त्रिषु ।
सामन्ते परसेनायाः पत्तौ चापि पुमानयम् । 1295
शल्यं शङ्कौ शरे वंशे योग्याभ्यासार्कयोरपि ।
अयि प्रश्नानुनययोश्चैत्यमायतने पुमान् ।
उद्यानपादपे बिम्बे बुध्न्ये चार्यस्तु बाहुजे ।
मुख्यं मूपालान्त्यमण्योरयः पुंसि गतावपि ।
शुभावहे चाभ्युदये तार्क्ष्यश्च गरुडाश्वयोः । 1300

---

1278 A कोके; D corrupt for लोके
1280. Mss. -साधव्येषु for -सोढ°
1281. Mss. स्वर- for भस्वैरि-
1284. Mss. बोध° for चोद°
1285. Mss. (except B) स्तुतौ for सृतौ
1286. CDE सत्वे for सत्ये. E भवे for शुभे. B अपि for स्त्रियाम्
1287. Mss योग्र- for योग्य-
1288. ABCD °बिंब अनातपे, a wrong samdhi
1289. B °भक्तिषु for °पङ्क्तिषु
1291. ABD न्याये. B चाबरो. B ऽरि च for मृते
1292. AD पुण्यं for पण्यं
1294. AD कीर्तिते
1296. Mss. योगा° for योग्या°
1300. CE तु for (the second) च

रथेऽनूरावश्वकर्णे पुंसि स्यान्न रसाञ्जने ।
क्षयो रोगे गतौ हिंसागृहहानिषु कथ्यते ।
तिष्यः पुष्ये कलियुगे दीप्त्यामलकयोः स्त्रियाम् ।
पूज्यस्तु श्वशुरे मान्ये मन्युर्दैन्ये क्रतौ क्रुधि ।
द्रव्यं भव्ये त्रिषु द्युम्ने क्लीबे जतुनि भेषजे ।    1305
गुणाश्रयेऽपि धिष्ण्यं तु शक्तौ भे निलयेऽनले ।
यज्ञे होत्रादिपुरतः स्थिते स्यात्नपुंसकम् ।
क्रिया कर्मणि चेष्टायां चिकित्सायां च निष्कृतौ ।
आरम्भोपायशिक्षासु पूजनेऽपि च पुंसि वा ।
समधारणसत्कारस्चनासु स्त्रियामपि ।    1310
धात्वर्थाख्यातयोर्भाग्यं शुभे चाशुभकर्मणोः ।
कल्यो निरामये सज्जे दक्षे साधौ कलासु च ।
प्रभातेऽपि नपुंसि स्यादर्थ्यस्तु विबुधेऽपि च ।
आत्मवाननपेतार्थशिलाजतुषु पुस्त्ययम् ।
रूप्यः प्रशस्ते रूपेऽपि रजते तन्नपुंसकम् ।    1315
सौम्यं तु सुन्दरे सोमदेवते पुंसि वा बुधे ।
दस्युः स्यात्तस्करे पुंसि द्वेषणेऽपि प्रकीर्तितम् ।

इति द्व्यक्षरयान्ताः ।

कुलायः परगेहे स्यात्कुलायो मट्टिपेऽपि च ।
कौर्णेयो राक्षसे वायावीशानानलयोरपि ।
तपःस्थिते फाल्गुनिके पुंस्येवाप्युच्छ्रयो नगे ।    1320
उच्छ्रायेऽपि जघन्यस्तु सुरभे नीचकर्मणि ।

---

1301 Mss प्रसा(E °साञ्जने
1302 CDE -ग्रह- for -गृह-
1303 ACDE दीप्ता°
1306 ABC शौचौ, D शैक्ति for शक्तौ
1307 E यज्ञ- for यज्ञे
1310 Mss °सारण- for °धारण-
1311. Post half °कर्मणो is wrong
1312 Mss. कल्या for कल्यो E सायौ for साधौ
1313 E प्रभावे ACD अर्थ्यस्तु B आढ्यस्तु E अर्थस्तु for अर्थ्यस्तु
1314 ABC अनुपेता°
1315 CE रूप्य
1316 BE °दैवते
1319 Cf notes, A कार्णेयो D कोर्णेयो
1320 AD °वामच्छ्रयो; BCE °वाप्युच्छ्रया Mss नये for नगे
1321. B उच्छ्रयेपि

अधमेऽन्त्ये च लिङ्गे च पुनपुंसकयोरपि ।
कषायो मधुरे स्निग्धे तिक्तेऽपि सुरभिण्यपि ।
अङ्गरागे च निर्यासे लोहिते च विलेपने ।
रञ्जकाश्मकशस्वाथविपूवेषु च रूषिते । 1325
आश्चर्यहाहागन्धर्वनिगर्वेष्वपि विस्मयः ।
अनयो व्यसने दैवे चाशुभे चापदि स्मृतः ।
अत्ययोऽतिक्रमे कृच्छ्रे दोषे दण्डविनाशयोः ।
अभिख्या कीर्तिमाहात्म्यनामशोभास्वपि स्त्रियाम् ।
प्रलयो मृत्युकल्पान्तमूर्छालेषु प्रशस्यते । 1330
विषयः स्यादिन्द्रियार्थे देशे जनपदेऽपि च ।
गोचरे च प्रबन्धादेर्यस्य ज्ञातस्य तस्य च ।
प्रत्ययः शपथे रन्ध्रे विश्वासाचारहेतुषु ।
प्रथितत्वे च संनादावधीने ज्ञानशब्दयोः ।
गाङ्गेयः षण्मुखे भीष्मे जातरूपकशेरुणोः । 1335
मुस्तायां पुंनपुंसि स्यान्मङ्गल्यस्तु मसूरके ।
बिल्वेऽश्वत्थे त्रायमाणे दधिकल्याणयोरपि ।
मनोज्ञे रोचनायां च प्रियङ्गुशतपुष्पयोः ।
अधःपुष्पे शङ्खपुष्पे शमीशुक्लवचासु च ।
हृदयं जीविते वित्ते भावे मनसि वक्षसि । 1340
पुत्रे मातरि सौभाग्यं सौन्दर्ये शोभनेऽपि च ।
संपत्तिज्ञानमाहात्म्यपुण्यमुक्तिषु कथ्यते ।
शरव्यं सायके लक्ष्ये मृगयासाधनेऽन्यवत् ।
प्रणयः स्यात्परिचये याच्ञायां सौहृदेऽपि च ।
निष्क्रिया बुद्धिसामर्थ्ये उन्मूले निर्गतेऽपि च । 1345
भुजिष्यः किंकरेऽपि स्याच्छ्वशुर्यौ स्यालदेवरौ ।
पर्जन्यौ रसदब्देन्द्रौ भ्रातृव्यौ भ्रातृजद्विषौ ।
स्यादर्यः स्वामिवणिजोः पर्यायोऽवसरे क्रमे ।

---

1323. AD मधुरो
1326. AD आश्चर्य
1327. BCE चाशुभे
1336. A मुस्ताया for मुस्तायां
1340 CE वृत्ते for वित्ते
1343 E om line 1343
1347 AD मातृज for भ्रा°
1348 Cf. notes

निर्वाणे च मकारे च समयो नियमे पुमान् ।
1350 शपथाचारसिद्धान्तकालसंवित्सु पुंस्ययम् ।
संकेतेऽवसरे चाथ समवाये च संनयः ।
पश्चादवस्थायिबले संस्त्यायः संनिवेशने ।
संघातेऽवयवेऽपि स्याद्विशल्या तु महौषधे ।
त्रिपुटालाङ्गलीदन्तीगतशल्यामृतासु च ।
1355 वक्तव्यो वचनीयेऽपि गर्ह्येऽधीने नपुंसकम् ।
वार्तिके चावदानी तु वाचि वल्गवलभयोः ।

इति त्र्यक्षरयान्ताः ।

सां(सं)परायः स्मृतो युद्धे विपदुत्तरकालयोः ।
भयेऽप्यनुशयो द्वेषे पश्चात्तापानुबन्धयोः ।
1360 पौरुषेयो विकारे स्यात्पुरुषस्य पदान्तरे ।
पुंसां समूहवधयोः पुरुषेण कृतेऽपि च ।
व्यवसायः कारणे च व्यापारे कृषिकर्मणि ।
स्थूलोच्चयस्त्वसाकल्ये नागानां मध्यमे गते ।
गन्धशीले चानुशयो दीर्घद्वेषानुतापयोः ।
समवायः समूहे स्यादथोर्ध्वश्रयणेऽपि च ।
1365 उन्नत्यां च विरोधे च स्यात्प्रतिश्रय आस्पदे ।
साधारणे चाश्रयणे सभायां च प्रकीर्तितः ।
करतोयः सदानीरे नदीभेदेऽपि कथ्यते ।
अवश्यायो हिमे गर्वे बहुधान्योऽब्दपद्मयोः ।

*इति चतुरक्षरयान्ताः ।*

वृषाकपायी श्रीगौर्योरिन्द्राणीवह्निभार्ययोः ।

इति पञ्चाक्षरयान्ताः ।

1370 रः पुमान्पावके कामे क्षये वज्रे शयेऽप्यरौ ।
रा स्त्रियां हेम्नि शालायामाशंसायां गतावपि ।
रं क्लीबे रुधिरे मूर्ध्नि ध्याने व्योमाण्डकुक्षिषु ।

1350 AB °संवत्सु
1353. B महौषधौ
1354 Mss read त्रपुटा for त्रि°, cf. MED 120 107
1356 Corrupt
1364. A °श्रयणेपि च, E °श्रयणेप्यपि for °श्रयणेऽपि च
1372. AC m for र, CD ध्यान-, B व्योमाण्डि-

त्रिपु स्याद्वक्रूभययोर्विरसे त्यागतीक्ष्णयोः ।
रास्तु द्वयोर्ध्वनौ स्वर्णे रिशब्दस्तु स्रवे क्षये ।
स्त्री रुग्ज्वालेच्छयोः कान्तौ रुर्ना युद्धे भये ध्वनौ । 1375
स्त्री कामिनीवृश्चिकयोर्द्रुः स्वर्णे पादपेऽपि च ।
श्रीर्वेषरचनावृक्षमासंपत्सरधासु च ।
वाणीलक्ष्मीलवङ्गेषु विषे बिल्वेऽप्ययं त्रिषु ।
जरायां पूरणे स्रुक्स्त्री होमाङ्गे च गतौ स्त्रियाम् ।
धूः स्यायानमुखे भारे कम्पने च तदिष्यते । 1380
दर्शनज्ञाननेत्रेषु दृक् स्त्री द्रष्टरि तु त्रिपु ।

इत्येकाक्षररान्ताः ।

वारः समूहेऽवसरे सूर्यादिदिवसे क्रमे ।
संभागे वरणे शीघ्रे हरे कूपकवृक्षके ।
मद्यपात्रे कुन्तले च द्वारे कारिणि पुंस्ययम् ।
आवृत्तौ स्त्री वारिघट्टे जलवारणवृन्दयोः । 1385
गजबन्धिनि वारी स्यान्मारो मन्मथशात्रवौ ।
पत्रं तु वाहने पक्षे पर्णे स्याच्छरपक्षिणोः ।
पट्टे च तिलके पुंसि पात्रं भाजनयोग्ययोः ।
नाटकादिप्रवेशेर्हाविध्वा(?) स्त्री राजमन्त्रिणि ।
पर्णे स्रुवादौ विभवे न पु तीरद्वयान्तरे । 1390
वित्तनिक्षिप्तपात्रे स्याच्चित्रमालेख्य अद्भुते ।
मङ्गले तिलके हेम्नि व्योम्नि पद्मे नपुंसकम् ।

---

1373 AD वक्तृ-; C वक्र- for वक्रु-. D -पयसोर् for -भययोर् E विशये for विरसे
1374 CE ध्वने, D धने for ध्वनौ
1376 B वृश्चिक°, D पत्रिक°, E वर्णिक° for वाम्रिक°
1377. E भासवत्सरवासु च for post half
1378. A वाणी*न्मील*ङ्गेषु for prior half
1379 A *स्त्री, BE स्रवस्त्री; CE स्रवस्त्री for स्रुक्स्त्री
1381. Col. BE °रेफान्ता for °रान्ताः
1382 B (orig ) वदने, and (after corr ) वद्रे
1383 D सामागे, E संयोगे for संभागे ACD कूपक°
1384 A चारे for द्वारे. B किरिणि for का°
1385 B स्त्रा for स्त्री
1386 ABD °बधनि
1390 B °चमा° for °द्वया°
1392 E हेति for हेम्नि

स्त्री त्वाखुपर्णीगोदुग्धासुभद्रादन्तिकासु च ।
नक्षत्राप्सरसर्पेषु पुंसि स्याद्वह्निसञ्ज्ञके ।
1395 कर्बुरे च रिपौ वृत्ते घने ध्वान्ते च दानवे ।
शैले चक्रे सुपर्णे च चारः स्यात्पिप्पलिद्रुमे ।
गतौ सर्पे च मन्थाने प्रियालस्पर्श(श ?)योरपि ।
नपुंस्युपाये रन्ध्रे च तारस्तरलशुद्धयोः ।
मुक्ताहारे नेत्रमध्ये नक्षत्रे शुद्धमौक्तिके ।
1400 गुरुसुग्रीवभार्यायां बुद्धयोषित्यपि स्त्रियाम् ।
पात्रे च शेखरे स्वर्णे पलानामयुतद्वये ।
विविधे पुंनपुंसि स्यात्प्रणवे रजतेऽपि च ।
उच्चस्वरेऽप्यनवधि मित्रः स्नेहितसूर्ययोः ।
शूरः पराक्रमे सूर्ये वीरः शूरे रतिप्रिये ।
1405 कविसामर्थ्ययोर्धीरश्चक्रं सैन्यरथाङ्गयोः ।
जलावर्ते च संसारे व्याजे यन्त्रान्तरेऽपि च ।
छन्दस्यस्त्रान्तरे सघे चक्रवाके पुमानयम् ।
तैलिकीये कौम्भकारे ग्रामजाले च राष्ट्रके ।
संग्रामे कुम्भकारस्य भाण्डे स्यात्साधनान्तरे ।
1410 चक्री तु पद्मनाभे च कुलाले चक्रवर्तिनि ।
परः स्यादुत्तमानात्मवैरिदूरेषु केवले ।
पुनपुंस्यव्ययेऽपि स्यात्परमात्मन्यनात्मनि ।
पुरं तु नगरे गेहे देहे पुंसि तु गुग्गुलौ ।
पुराव्यय पूर्वकाले पुरस्तात्पाटलीसुते ।
1415 प्रबन्धेऽपि चिरातीते निकटागामिकेऽपि च ।
बभ्रुर्विशाले नकुले कृशानौ यादवेऽपि च ।
शूलिन्यञ्जे पिङ्गले च यथावत्कथितो बुधैः ।

---

1394 AC °सघेषु for °सर्पेषु E °सक्तिके
1396. ACD पपरिद्रुमे
1397 E सपे for सर्पे E-प्रियालु for प्रियाल-
1401 AD शेखने E शेवरे for शेखरे
1404. ACE पराक्रमौ
1406 E om. from व्याजे up to कौम्भकारे (in line 1410)
1407 E om l 1407
1408. E om. the prior half. ACD तैलिकीयें A कासि° for कौम्भ°
1414 CE पुरव्यय D पुर व्यय
1417 ACD **वत्. E वत्सरे for यथावत्

चन्द्रः शशाङ्के कर्पूरकाम्पिल्लस्वर्णवारिषु ।
रम्ये शुभकरे क्लीबे दरोऽस्त्री भयरन्ध्रयोः ।
शङ्खे चालिङ्गमल्पार्थे मात्रा कर्णादिभूषणे । 1420
औषधेऽवधृते कार्त्स्न्येऽक्षरावयववृत्तयोः ।
परिच्छेदे च मानेऽल्पे प्रत्ययेंऽशेऽवधारणे ।
वरोऽभीष्टे देवतादेः श्रेष्ठे जामातृषिद्गयोः ।
अथ काश्मीरजे वृत्ते बोदरीपत्तिये त्रिषु ।
त्रिफलायां शतावर्यां स्त्रीलिङ्गे स्याद्वरावरी । 1425
शरं दध्नि जले पुंसि बाणे शैलेऽम्बरे खगे ।
दन्ते तेजनके मूले काशे कमठवंशयोः ।
कार्पासे चास्त्रशस्त्राश्रुशोणितेषु प्रकीर्तितम् ।
नेत्रं पथि गुणे वस्त्रे तरुमूले विलोचने ।
नद्यां रथे मत्कुणे च वल्के नाप्यन्तरेऽपि च । 1430
त्रिषु स्यान्नेतरि क्षेत्रं शरीरे पुरगेहयोः ।
केदारयोनिभार्यासु सिद्धस्थानेऽपि चेष्यते ।
फारो वेधे निश्चये च बले यत्ने पतावपि ।
तुषाराद्रेः स्त्रियां दूत्यां बन्धने बन्धनालये ।
प्रसेवके कालिकायां हेतावथ करः पुमान् । 1435
नभांशुहस्तकरणोपधाधनशिलासु च ।
राजदेयेभशुण्डायां कर्तर्यथ कुलेऽचले ।
गोत्रं नाम्नि वने मार्गे चित्रे चोरे भुवि स्त्रियाम् ।
संभावनीये गोवृन्दे बले भ्रातरि च त्रिषु ।
सारं वरेण्ये वानीरे धने च क्वचिदिष्यते । 1440
द्वारं पुरान्निर्गमनेऽप्युपाये रन्ध्रमुच्यते ।

---

1418. AB -कपिल- for -काम्पिल्ल-
1422. B om. lines 1422-3
1423. C विट्ङ्गयोः; D पिङ्गयो
1424. D मत्रे for वृत्ते
1425. Mss शरावर्यां, ADE वरावती, B वरासने for वरावरी
1428. E °शोषितेषु for °शोणि°
1430. AD मत्कुणे for मत्कुणे. B वल्कनाप्यतरेपि च for post. half
1434 E om the post. half of this line and prior half of the next
1435 D प्रसेवके कालिकाया च for prior half
1436 D नभाशु°
1438 AD पोत्र for गो°
1440. AD सारा वरेण्ये, B सार वरेण्य-; CE सर वरेण्या-
1441. ABCD वार for द्वार. AD °नेप्युपाय

गौरः पीतेऽरुणे श्वेते विशुद्धे मृगमोदयोः ।
आविक्येऽपि नपु पद्मकेसरे सितसर्षपे ।
स्त्रियां शशिनि गौरी तु नागकन्योमयोर्मता ।
1445 रोचनीरजनीपिङ्गीप्रियङ्गुवसुधासु च ।
नदीभेदे च वरुणयोपित्यथ मखे वने ।
आच्छादने सदादाने दम्भे सद्रक्षके त्रिपु ।
सादने च कवित्पात्रे सदेये सत्रमव्ययम् ।
गृहे पशौ च तन्त्रं तु करणे च परिच्छदे ।
1450 तन्तुवाये प्रधाने च शास्त्रसिद्धान्तयोरपि ।
तथाप्टीसायकोपाये श्रुतिशाखान्तरेऽपि च ।
कुटुम्बार्थे च कर्तव्यतायां मुख्ये घटीचमे ।
सिरायाममृतायां च तन्त्री वीणागुणे तनौ ।
शुक्रः काव्येऽनले ज्येष्ठे केतौ शुभ्राक्षिरोगयोः ।
1455 क्लीब क्षेत्रे महेन्द्रे च कुटजेऽर्जुनभूरुहे ।
भद्रं स्यान्मङ्गले हेम्नि मुस्तके करणान्तरे ।
वृषे पुंसि तिथौ रुद्रे वाच्यवच्छ्रेष्ठसाधुनो ।
गजभेदे नृभेदे च मन्दाकिन्यां स्त्रियामपि ।
कट्फलानन्तकृष्णासु रास्नायामथ कथ्यते ।
1460 क्षुद्रस्त्रिष्वधमे क्रूरे स्वल्पे कृपणवर्णयोः ।
व्यङ्गावेश्यानटीकण्टकारिकासरघासु च ।
स्त्रियां पुंसि दरिद्रे स्यात्क्षुद्रकर्मणि चेष्यते ।
सौद्रं मधुनि पानीये चेन्द्रः शतमखार्कयोः ।
योषिदन्तरात्मनि पतौ श्रेष्ठेऽपि स्यात्कपिञ्जले ।
1465 स्वरुर्वज्रे यूपखण्डे यज्ञपात्रे शिलीमुखे ।

---

1443 पद्मे for पद्म--
1444 CDE °कन्यानयोर्
1446 ACDE मघे for मखे
1447 ACD सद्रक्षके B सद्गुरके B पुमान् for त्रिपु
1448 B सदेये for सदेये
1449 BC मठे for गृहे ABCE तन्त्र for °न्त्र
1451 B तथाष्टि°
1457 E °साधयो for °साधुनो
1458 E गय -for गज-
1459 ABD कट् for कट् - BE अपि for अथ
1461 E कटकारिका
1463 B क्षुद्र for सौ°
1464 AC कपिञ्जरे, DE °ञ्जरे for °ञ्जले
1465 B transp यूपखण्डे and यज्ञपात्रे

निपादादावुदात्तादावकारादावपि स्वरः ।
गुरुर्बृहस्पतौ पितृमात्रादौ दुर्भरेऽधिके ।
निषेकादिकृतिस्थूले त्रिषु मात्राद्वयेऽपि च ।
हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु ।
सिंहाश्वकपिभेकाहिशुकलोकान्तरेषु च । 1470
स्वर्णे मणौ च कपिले त्रिष्वथ प्राज्यहोमयोः ।
विधिदामोदरेशेषु भूरिश्चन्द्रेन्द्रयोरपि ।
धात्री जनन्यामलकीवसुमत्युपमातृषु ।
वप्रः प्राकारतटयोः साले सानौ विदारणे ।
रन्ध्रं छिद्रे निम्नगेऽवकाशे समयदोषयोः । 1475
पार्श्वेऽथ कन्दलीतुलस्यो रिन्ध्रः(?) स्याद्भरो धरे ।
भारे लाभे दुर्भरे च रागभेदे रणेऽपि च ।
वज्रं तु कुलिशे शस्त्रेऽप्यशनौ रचनान्तरे ।
मणिभेदे सूचिभेदे योगे चामलके स्त्रियाम् ।
वज्रवल्ल्यां गळूच्यां स्यात्सुरः सूर्येऽमरे पुमान् । 1480
सुरा देवस्त्रियां मद्ये शारिः पर्याणपक्षिणोः ।
क्लीबे द्यूतगुणेऽपि स्यादग्रमालम्बनेऽधिके ।
पुरोपरिप्रान्तार्येषु न पुंसि प्रमिताशने ।
मरुर्निर्जलदेशोऽद्रावद्रिः शैलेऽर्कवृक्षयोः ।
वृत्रस्तु दानवे शत्रौ ध्वान्ते चक्रघने गिरौ । 1485
अस्रस्तु कुन्तले कोणे रक्ते नेत्राम्बुनि स्मृतः ।
शारो वायौ नरी (?) पुंसि कर्बुरे वाच्यलिङ्गकः ।
मन्त्रो वेदे गुप्तवादे देवादीन्साधनेऽपि च ।
बभ्रुर्हिरण्यगर्भेऽग्नौ विपुले नकुलेऽपि च ।
पिङ्गले त्रिषु विष्णौ चाथो सारस्तु वरे त्रिषु । 1490

---

1468. A om. from the post. half of line 1468 up to prior half of line 1471
1469. E पातार्क- for वातार्क-
1475. D छिद्रे निम्नगपारेवासमय°
1478. AD रचनांतरे
1480. AD गळीच्यां; B गळूच्यां; E गुडूची
1481. CE शौरिः for शारिः
1486. B आसस्तु कुंतले घोणे for prior half
1488. cf. notes
1489–90. cf. notes

क्लीबे न्याये बले पुंसि स्थिराशेऽपि तथा भवेत् ।
यात्रा स्यायापने याने देवतादिमहोत्सवे ।
इरा भूवाक्सुराप्सु स्यात्स्त्रियामप्सरयोपिति ।
तन्द्री निद्राप्रमीले च तन्द्रापि च समार्थके ।
1495 मात्रा परिच्छदेऽल्पे च परिमाणे च पुंसि ना ।
कात्स्न्र्येऽवधारणे क्लीबे स्त्रिया स्याद्भूषणे घने ।
वर्णवृत्ताशयोश्चापि स्वरो बालेयवर्षयोः ।
निदेशग्रन्थयोः शास्त्रं शस्त्रमायुधलोहयोः ।
मुखाग्रे क्रोडहलयोः पोत्रं क्षीरं पयोम्बुनोः ।
1500 राष्ट्रोऽस्त्री विषये चोपद्रवे व्यग्रस्तु नाकुले ।
अभ्यासके च देशे च क्रूरो कठिननिर्दयौ ।
मन्दस्वच्छन्दयोः स्वैरः शुभ्रमुद्दीप्तशुक्लयोः ।
धारा सपातपुरयोर्नरोऽजे मानवेऽर्जुने ।
तिरोऽन्तर्धौ तिर्यगर्थे ऊरी विस्तारसंमतौ ।

इति द्व्यक्षररेफान्ता. ।

1505 शृङ्गारः सुन्दरे नाट्ये रसेऽपि गजमण्डने ।
नपुंसि चूर्णसिन्दूरलवङ्गकुसुमेषु च ।
गान्धारः स्वरभेदे स्यान्न स्त्री देशे रतान्तरे ।
मुर्मुरस्तु तुषाग्नौ च किशोरस्तुरगेऽर्भके ।
कुटीरं क्षुद्रभेदे स्याच्चत्वरं तु चतुष्पथे ।
1510 शीघ्रे च शम्बरो दैत्यभेदे क्लीबे जले पुमान् ।
विष्फारो धनुषः स्वाने प्रभूते जृम्भितेऽपि च ।
विधुरस्त्वरितेऽधीरे कष्टविश्लेषयोरपि ।
नागरे कौरवामात्ये विवशे विकलेऽन्यवत् ।

---

1492. E धात्रा
1496 E om स्याद्
1497 E बाले च वर्षयोः
1500. AB चोपद्रव्य
1502 [illegible] स्वैर E रोषु for स्वैरः
1505. CE शुभ्ने for सुन्दरे
1510 E दैत्ये for दैत्य-
1511. C विष्फारौ

अपत्नीके. सुन्दरी तु पल्लवे विद्रुमस्त्रियोः ।
सिन्दूरं तु शिलाभेदे नागसंभववृक्षयोः । 1515
केसरोऽस्त्री स्कन्धरोम्णि किञ्जल्के वकुले तु ना ।
पुंनागे च नपुंसि स्यान्नागकेसरहिङ्गुनोः ।
कर्परस्तु कपाले स्याच्छले घटकपालके ।
कान्तारो दुर्गमे मार्गे दुर्भिक्षे पातके वने ।
संस्तरः प्रस्तरे यज्ञे बर्बरः पामरे पुमान् । 1520
कुन्तलानां च विन्यासनीवृदन्तरयोरपि ।
स्त्रियां तु काञ्जिकायां च पुष्पदेवेन्द्रयोरपि ।
बन्धुरं मङ्गले रम्ये नम्रे हंसे तु पुंसि तत् ।
बन्धूके च विहङ्गे च बन्धुरापण्ययोरपि ।
दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः । 1525
करीरः कलशे वृक्षभेदे वंशाङ्कुरेऽपि च ।
करीरुश्चीरिकायां च दन्तमूले च दन्तिनाम् ।
करीरं कोणमध्यस्थपुलिने दर्दुरे तटे ।
शर्करा खण्डविकृतावुपलाकर्परांशयोः ।
शर्करान्वितदेशे च रुग्भेदे शकलेऽपि च । 1530
कावेरी स्यात्सरिद्भेदे पण्यनारीहरिद्रयोः ।
गाङ्गेरी बृहतीहिंसामक्षिकामातृकेषु च ।
पिञ्जरं कनके राजभेदे पीते च पुंसि तत् ।
शिखरं शैलवृक्षाग्रे रसापुलककोटिषु ।
पक्वदाडिमबीजाभमाणिक्यकलशेषु च । 1535
पुंलिङ्गे तु शिवाभेदे खट्वाङ्गे द्वारपालके ।

---

1514. A अप्सरी for °त्नीके. E विद्रि° for विद्रुम°.

1516. ACDE स्कन्ध(A before corr. °न्ध)रोम्णि. E न for ना

1518 E कर्पूरस्तु. ABCD चाले; E छले for छद्मे

1520. E संतर for संस्तरः

1521. A कुंतलान्तां

1523. A om. lines 1523–4. E नाभे for नम्रे

1525. ACDE °माण्डादि°. B भेकयोः

1527. CE करीरम्

1530. E शर्करान्वितदेशे च for prior half

1531. A दंत- for पण्य-

1535. A मरकत-; BE माणिक्य-

1536. B शिखा- for शिवा-. B खट्वेरि च for द्वारपालके

ईश्वरो दैवते चाढ्ये शंभौ स्वामिनि मन्मथे ।
समर्थेऽस्देश्वरीच्छाया पार्वत्यामीश्वरा मता ।
तमिस्रं तिमिरे रोषे तमिस्रा तामसीनिशि ।
1540 कुमारो बालके स्कन्दे पुत्रे नामनि वाच्यवत् ।
नमेरुः सुरपुंनागे सुमेरुः कनकाचले ।
आधार आलवालेऽम्बुबन्धे च किरणेऽपि च ।
स्थानात्मीयान्यतादर्थ्यरन्ध्रान्तर्धिषु चान्तरम् ।
परिधानेऽवधौ मध्येऽन्तरात्मनि नपुंसके ।
1545 विनावसरबाह्येषु चाम्बरं व्योम्नि वाससि ।
सुगन्धिनि च कार्पासे गोपुरं द्वारमात्रके ।
पुस्तके च पुरद्वारे पुरे सौधेन्द्रियेऽपि च ।
शारीरः क्षोभकरणे शुके शकुनिकान्तरे ।
युद्धार्थे गजपर्याणे व्यवहारे च वाच्यवत् ।
1550 आसारः स्यात्प्रहरणे वेगे वृष्टौ सुहृद्बले ।
प्रवेशे च प्रसारे च कुञ्जरः कुन्तले पुमान् ।
मस्तके भूषणे नागे पुष्करो द्वीपसर्पयोः ।
तीर्थे खड्गफले तोयकरिहस्ताग्रयोरपि ।
वाद्यभाण्डमुखे पद्मे व्योम्नि मार्गे तिथावपि ।
1555 विहारो भ्रमणे स्कन्धे लीलायां सुरतालये ।
रुधिरोऽङ्गारके छागे कुङ्कुमे शोणिते पुमान् ।
प्रकारो भेदसादृश्यकृतिष्वस्त्रीङ्गितेऽपि च ।
द्वापरो युगभेदे स्यात्संशयेऽपि पुमान्भवेत् ।
किंशारुर्धान्यशूकेषुकङ्कपक्षिषु कथ्यते ।
1560 भद्रो भग्ननारीरुग्बाणभीदारणेषु च ।
दीर्णे स्वयं चावटे स्यात्तूवरस्तु प्रचक्षते ।

---

1537 CE ईश्वरे
1539 E रागे (probably more correct)
1543 AD स्थानात्मन्यार्थ° for °त्मायान्य° A चातरे E चांतरा
1545 E विनावसन°
1548 E शारीर
1549 AD °हारेण for °हारे
1552 ABCD पुष्करद्वीप°
1557 ACD °स्पहतिषु B °श्याकृतीषु
1560 E भग- for भग्न-
1561 Mss स्वये। B तूतरस्तु, CE तूवरस्तु

अजातशृङ्गेऽप्यश्मश्री संगरस्तु विपापदो ।
शमीफले क्रियाकारे प्रतिज्ञासविदाजिषु ।
विष्टरो विटपी दर्भमुष्टी पीठाद्य आसने ।
मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु ।　　　　1565
क्रोधे च मक्षिकाया च कलत्रं श्रोणिभार्ययोः ।
नृपतिप्रभृतीना तु दुर्गस्थानेऽपि च स्मृतम् ।
अजिर विषये काये चाङ्गणेऽपि तदिष्यते ।
अक्षरं स्याद्ब्रह्मणि च वर्णे मोक्षेऽप्यनाशने ।
गह्वरं तु गुहादम्भनिकुञ्जगहनेष्वपि ।　　　　1570
औशीरं चामरे दण्डे चासने शयने भवेत् ।
पिठरो मन्थदण्डे स्यात्स्थाल्या स्त्री। मुस्तहिंस्रयोः ।
नागरः सुरते संज्ञा चान्तर्जाते नपुंसकम् ।
राजीवकन्दे चर्या(?) प्रवीणाकुत्सितयोर्विना ।
शार्वरं त्वन्धतमसि घातुके भेद्यलिङ्गकम् ।　　　　1575
शबरे कुञ्जरे वाच्यलिङ्गः स्याद्धिंसनेऽपि च ।
कुक्षौ तु जठरो न स्त्री त्रिषु वृद्धकठोरयो ।
अधरस्तु निकृष्टोष्ठाद्यादेशेष्वपि(?) वाच्यवत् ।
एकाग्रमेकतानेऽनाकुले चोत्तरमुच्यते ।
उपर्युदीच्यश्रेष्ठेषु प्रतिवाक्येऽप्युत्तरके (?)　　　　1580
विराटतनये अक्षे स्त्रिया पुंसि च शस्यते ।
मधुरस्तु प्रिये स्वादौ रसभेदे पुरे स्त्रियाम् ।
उदारो दातृमहतोरितरस्त्वन्यनीचयो ।
उररी चोररी द्वे च विस्तारेऽङ्गीकृतेऽपि च ।
त्रिकारि ( री ? ) वर्षेऽङ्गहीने शार्वरी रात्रिवर्षयो ।　　　　1585
कबरी केशपाशे च हिङ्गुपत्रेऽपि च द्वयो ।
इति त्र्यक्षररेफान्ता ।

---

1562 E शकरस्तु for सं°
1565 AD °शुभे for °शुभ°
1566 E °श्रेण्ययोः for °भार्ययो
1572 E ऐदरो B मत्त~
1575 ADE वर्तुके for घा°

1578 All Mss read अन्यरस्तु for अधरस्तु
Post half corrupt
1579 B °मुत्तरो for °मुच्यते
1581 A [illegible] B [illegible] CE कक्षे for अक्षे

अर्धचन्द्रस्तदाकारे बाणे बर्हे शिखण्डिनः ।
शतपत्रं पक्षिभेदे दारुघाते कुशेशये ।
घनसारस्तु कर्पूरे महामेघे च चन्दने ।
1590 अलंकारः शास्त्रभेदे मण्डनेऽथ जवे पुमान् ।
उच्छ्राये चातिमात्रः स्यान्मद्गुरौ तु भयंकरः ।
भये सहचरी तु स्यादनुचारे सहाशने ।
मुक्ताधरस्तु वणिजि श्लक्ष्णराशौ दिवाकरे ।
संप्रहारो हते युद्धेऽश्वतरः सुरवाजिनोः ।
1595 कुलाङ्कुरो मूलदेशे चोरे करवटेऽपि च ।
धार्तराष्ट्रो हसभेदे दुर्योधनकुलेऽपि च ।
गिरिसारं तु लोहेऽपि लक्ष्मीपुत्रस्तु मन्मथे ।
धनाढ्येऽश्वे परिकरः पर्यङ्कपरिवारयोः ।
प्रगाढे गात्रिकाबन्धे व्राते चारम्भसङ्घयोः ।
1600 हस्तसूत्रे प्रतिसरो माल्यमन्त्रविशेषयोः ।
विभूषणे सैन्यपृष्ठे प्राणशुद्धौ च कङ्कणे ।
पयोधरः स्तने मेघे नाळिकेरे च सागरे ।
इक्षुभेदे कशेरौ च धेनौ च परिचक्ष्यते ।
अवस्करस्तु विष्ठाया गुह्ये चाडम्बरोऽस्त्रियाम् ।
1605 तूर्यशब्दे च सरम्भे गजेन्द्राणां च गर्जिते ।
अभिहारोऽभियोगे च चौर्ये सनहनेऽपि च ।
स्याज्जङ्गमे परीवारः खड्गकोशे परिच्छदे ।
द्वारि द्वाःस्थे प्रतीहारः प्रतिहार्यप्यनन्तरे ।
राजस्त्रीणामलंकारः कृतायामपि च स्त्रियाम् ।
1610 दुरोदरो द्यूतकारे पणे द्यूते नपुंसि वा ।

---

1584 C चैव for हे च
1590. E जये for जवे
1593 CDE श्लक्ष्ण for श्लक्ष्ण-
1595 CDE करपटे
1597 CE गिरसार others गिरासार
1598 AC धनाढ्येश्वे D धनाढ्येषे, E धनाढ्यश्वे for °ढ्येऽश्वे
1599 AC प्रगाढे for °ढे
1603 E °चक्षते
1604 B अवस्करस्तु
1605 CE सारम्भे B गर्जने for गर्जिते
1606 CE °योगो न for °योगे च
1607 B स्वगे for खड्ग-
1608 AD परीहार D प्रतीहार्य°
1609 E °कारकृतायाम्
1610 B द्यूतकरे

अरुष्करो घातुके च व्रणकार्येऽप्यनुत्तरः ।
नोदीच्यां नोपरि श्रेष्ठे चोपह्वरमुदाहृतम् ।
हायने सर्वधारी स्याद्रुधिरोद्गारि वत्सरे ।

इति चतुरक्षररेफान्ताः ।

लः खण्डने त्रिष्वाधाने स्त्री नेन्द्रे लवणे तु लम् ।

इत्येकाक्षरलान्ताः ।

हली कृषीवले पुंसि कृष्णस्यैवाग्रजन्मनि । 1615
पलं स्यान्मत्सरे मांसे मल्लो मलकशक्तयोः ।
स्थली खनित्रे कुद्दाले क्षेत्रभेदे नपुंस्यपि ।
खलो नीचे दुर्जने च कुलस्थायामपि स्त्रियाम् ।
हर्वितेऽव्यक्तमधुरे रवे स्याद्वाच्यलिङ्गकः ।
कला शिल्पे कालभेदे चन्द्रांशे शकलेऽपि च । 1620
वित्तवृद्धौ च मूले च सुषुमाविषयोस्तथा ।
तत्त्वदागमसिद्धास्तु गुरुणि स्त्रीरजस्यपि ।
कलं शुक्रे वाच्यलिङ्गमव्यक्तमधुरे ध्वनौ ।
कामशास्त्रे च संगीते मन्त्रशास्त्रेऽपि च स्त्रियाम् ।
कलिः स्यात्कलहे शूरे देशेऽप्यन्तयुगे पुमान् । 1625
पापे च कैतवे शोके कालस्तु यमकृष्णयोः ।
महाकालेऽपि समये मृत्युमञ्जिष्ठयोः पुनः ।
काली गौर्यां क्षीरकीटे नील्यां त्रियाति(?)च स्त्रियाम् ।
तलं क्लीबे तालतरौ पेटे ज्याघातवारणे ।
खड्गमुष्टौ वितस्तौ च स्वरूपेऽधरपृष्ठयोः । 1630
तालः कालक्रियामाने करास्फोटद्रुभेदयोः ।
वाद्यभाण्डेऽपि कांस्ये च तालं तु हरितालके ।

---

1616. ABCD फलं for पलं
1618. B ना for च
1621. E वृष° for वित्त°
1625. B ऽन्त्ययुगे
1627. B पुमान् for पुनः
1629. CD ताल्वतरौ, AC पटे; E पेठे for पेटे
1630 AD वितस्ते for वितस्तौ
1632. CE कांस्यस्य for कांस्ये च

बलं गन्धे रसे धूपे स्वामिनि स्थौल्यसैन्ययोः ।
शक्त्याभिमानयोः क्लीबे पुंसि तु स्याद्धलायुधे ।
1635 बलिस्तु दैत्यभेदे च बलवत्काकयोः पुमान् ।
अस्त्री चामरदण्डे च त्वक्कोचे गृहदारुणि ।
नैवेद्ये गन्धके पाणौ वली चापि प्रकीर्तितः ।
वाल्यालके बला तूका बलं चोन्मादमानयोः ।
बालो मूर्खेऽर्भके व्यालग्राहावश्वेभपुच्छयोः ।
1640 ह्रीबेरकेशयोर्बाला योषिद्भूषात्रुटीषु च ।
शुक्रः शुभ्रे रेतसि च रोमभेदे च वत्सरे ।
कुलं वर्गे समूहे च देहे गोत्रे गुणेऽपि च ।
सजातीये जनपदे मन्दिरे च नपुंसकम् ।
मूलं तु रोगे नक्षत्रे शिफायामन्तिकाद्ययोः ।
1645 स्वीये वशीकृते चाथ जालमानायवृन्दयोः ।
गवाक्षे क्षारके दम्भे कोशातक्या स्त्रिया भवेत् ।
वेला काले जलनिधेस्तीरनीरविकारयोः ।
अक्लिष्टमरणे रागे सीम्नि वारिबुधस्त्रियोः ।
मर्यादायां चाथ फलं फले मांसे धनेऽपि च ।
1650 भोगे लाभे च निष्पत्तौ बीजबाणाग्रयोरपि ।
सस्ये हेतुकृते जातिफले च फलकेऽपि च ।
कक्कोले त्रिफलावार्क्षु मुक्ताधान्यकणेषु च ।
मुष्टौ कर्षचतुष्के स्यात्पलं चापि प्रयोजने ।
लीला तु विभ्रमे हेतौ क्रियायां भाविलासयोः ।
1655 कीलो धूर्ते रथाक्षे च शङ्कौ ज्वालामहीध्रयोः ।
स्त्रियां कपोणिनिर्घाते प्रहारे रतिसंभवे ।
पुलः स्यात्पुलके चापि विशाले महतीष्यते ।

---

1633. B -रूपयोः for -सैन्ययो
1636 B गृहदारिणि
1638. ABD बले for बला
1641 AD रागभेदे
1644 B °का द्वयोः; E °काख्ययो for °काद्ययो·
1646 B क्रूरे for दम्भे
1647 BCDE तीरे for तीर-
1648 E वार- for वारि-
1653 D फल for पल
1655. Om. in A. B ज्वार- for ज्वाला-

खिलमप्रहते शून्ये उत्तमौ केवले त्रिषु ।
मौलिः किरीटे चूडायामशोके संयते कचे ।
पीलुर्गजे शरे पुष्पे परमाणुद्रुमेदयोः । 1660
व्यालः पुंसि शठे सर्पे श्वापदे दुष्टकुञ्जरे ।
मलोऽस्त्री पापविट्किट्टकृपणेषु त्रिषूच्यते ।
वसायामपि शूलं तु ध्वजे योगान्तरे रुजि ।
आयुधे विक्रये वध्याशङ्को गर्भेऽपि योषिताम् ।
आलिः पङ्क्तौ वयस्ये स्याद्भृङ्गे पालिस्तु पुंसि वा । 1665
अंशभेदे च पङ्क्तौ च संजातश्मश्रुयोषिति ।
असे च कर्णतालाग्रे यूके प्रस्थे च कथ्यते ।
शील स्वभावे सद्वृत्ते चेलं वस्त्रेऽधमे त्रिषु ।
जिपि (?) स्त्रियामथ स्थूलं पीवरे च जडेऽपि च ।
एला सूक्ष्मे त्रुटौ स्त्री स्याल्लोलश्चलसतृष्णयोः । 1670
भल्लो भल्लूकशरयोर्वार्तासंभाव्ययोः किल ।
अलं भूषणपर्याप्तिशक्तिवारणवाचके ।
निषेधवाक्यालंकारे जिज्ञासानुनये खलु ।

इति ञ्यक्षरलान्ताः ।

कुण्डलं वलये पाशे क्लीबे कर्णविभूषणे ।
गळूच्यां स्त्री काञ्चनाद्रौ सर्पे पुंसि तु कुण्डली । 1675
मण्डलं वर्तुले राष्ट्रे कुष्टे द्वादशराजके ।
देवतायतने बिम्बे स्थले वृन्दे पुमाञ्शुनि ।
मेखला खड्गबन्धे स्यात्काञ्चीशैलनितम्बयोः ।
मुञ्जरज्जौ शाड्वलस्तु पुंसि कर्दमदेशयोः ।

---

1658 E खलम् for खिलम्
1659 BE सयत for °ते
1663 CE वासायाम् for वसा° E रुचि for रुजि
1665, Cf. notes
1667 A आस्ये, E असे, D आसे for असे A भूकप्रस्थे
1668. BE सद्वृत्तौ. E यत्रे for ऽधमे, य and ध being often confused
1670 E लोकश्चाल्पसतृष्णयो for post. half
1673 ABCD °ल्कारजि°
1678. ABD कांचिशैल°
1679 CE मन for मुञ्ज-. E °भेदयो for °देशयो

1680 अचलः पर्वत वृक्षे कीलावसुधयोः स्त्रियाम् ।
चञ्चलः कामुके वायौ लक्ष्म्या तटिति च स्त्रियाम् ।
जाङ्गलं मासामिलिते स्त्रियां स्याच्छारदीजले ।
शृङ्खला त्रिषु संदर्भविशेषे निगलेऽपि च ।
गोपालः पशुपाले स्याद्विकुण्ठे च जितेन्द्रिये ।
1685 सृगालो दैत्यभेदे च क्षुद्रशत्रौ च जम्बुके ।
न्यूने हीने च विकलो दुष्टे च ननियन्त्रके ।
नकुलः पाण्डुतनये सर्पभुक्कुलहीनयोः ।
उत्तालो भीषणे मत्ते विलालो विकटस्थले ।
लाङ्गली नालिकेरे च जामदग्नौ च पुंस्ययम् ।
1690 लाङ्गूलं वानरे पुच्छे फल्गुन्या लवली स्त्रियाम् ।
अनलं राशि नाले च पुंस्यान्यौषविभेदयोः ।
दुकूलं सूक्ष्मवस्त्रे स्यादुत्तरीये सितांशुके ।
उपलः प्रस्तरे रत्ने चाश्मरूपमृदि स्त्रियाम् ।
ऐसवे चपलः शीघ्रे दुर्नीतावस्थिते रसे ।
1695 स्त्रिया विद्युति चाभीलः कृच्छ्रे भीतेऽथ वातुलः ।
वातासहेऽपि वात्याया पुस्युन्मत्तेऽपि च त्रिषु ।
कमलं सलिले ताम्रे जलजे क्लोम्नि भेषजे ।
कुरङ्गभेदे कमलः स्त्रिया तु श्रीवरस्त्रियोः ।
कम्बलो नागराजे च सास्नाया मृगरोमजे ।
1700 गजप्रावरणे चैव निष्कला विगतार्तवा ।
कलाहीने चावलिस्तु रेखायामपि कथ्यते ।
बहुलो बह्वसितयोः कृत्तिकाया गवि स्त्रियाम् ।
बलाया कृष्णपक्षे च कीलालं शोणितेऽम्भसि ।

---

1686 E –नियन्त्रके
1689 A गागली, D गगली for लाङ्गली
1691. A पुंसि न्यौ°, B पुंस्यस्यौ°, DE पुंस्यन्यौ°, all corrupt
1694. E ऐश्वर for ऐसवे A दुर्नितावस्थिते, B दुर्नीतेपस्थिते: CE दुर्नीतावस्थिते
1695. B तयन्तुल E ऽथ वातुक for ऽथ वातुल
1697 BCE सरित्रे for सलिले
1698 A करग B कुरङ्कु– for कुरङ्ग DE श्री– for श्री–
1699. B नगराजे for °राजे C सास्नाया, E मृगमेनजे for मृगरो°

पटलं नेत्ररोगे च परिच्छेदसमूहयो. ।
तिलके पुनपुंसि स्याच्छदिः स्त्री पटलीति च । 1705
पाताल वडवाग्नौ स्याद्बलिसद्मनि चेष्यते ।
कुकूल शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले ।
निर्णीते केवलमिति त्रिलिङ्ग त्वेककृत्स्नयोः ।
पर्याप्तिक्षेमपुण्येषु कुशल शिक्षिते त्रिषु ।
भारवाहे प्रवालं तु वीणादण्डे च विद्रुमे । 1710
अङ्कुरे स्यात्किसलये करालो दन्तुरे पुमान् ।
तुङ्गेऽथ पेशलो दक्षे चारौ च मुसले हरे ।
मृदुले कोकिले प्रोक्त अनिलस्तु प्रभञ्जने ।
विमलो निर्मले शुभ्रे हिन्तालः पादपान्तरे ।
उन्नते उत्थितेऽपि स्यादुत्तालः परिकीर्तितः । 1715
शाण्डिल्यो मुनिभेदे च शिल्पे च परिकीर्तितः ।

इति त्र्यक्षरलान्ताः ।

गण्डशैलः कपोले च द्रोणपाषाणभेदयोः ।
महानीलो भृङ्गराजे मणिनागविशेषयो. ।
उत्कोचेऽस्त्री कटफलः कर्मशीलस्तु कर्मठे ।
अनुकूलस्त्वनादेशे विधेयेऽनुगुणेऽपि च । 1720
महाबली दैत्यभेदे बलवत्यपि कथ्यते ।
वनपङ्क्ती विष्णुदाम्नि वनमाला प्रकीर्तिता।
गोलाङ्गूलः कृष्णकपौ पशुपुच्छे नपुंसकम् ।
तृणशालो राजताल्यां वेणौ रतिकिलः शुनि ।

इति चतुरक्षरलान्ता. ।

---

1706 BE चक्षते for चष्यते
1707. AD कुकुल E कुकूल B श्वभ्रे न तु तुषाग्नौ for post half
1708 CE निर्णिक्ते for °णीते CDE केवलमति
1711. AD कुवल्ये E किसल्य CE कराले .
1713. E मत्तकम्

1716 B om line 1716. Cf notes
1717. A गन्डे B गन्ड- for गण्ड-.
1718 D om.line 1718 E महानिले
1721 CDE वनवल्ली a peculiar word
1723 Mss. गोलाङ्गुले E °पशे for °कपौ
1724 Cf notes

1725 वः पुमान्सान्त्वने वायौ सयमे वरुणे स्मरे।
वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये।
विश्वक्षुपि व्योम्नि वाते परमात्मनि पक्षिणि।
विट् पुरीषे जने वैश्ये क्रमात्पुंसि द्वयोः स्त्रियाम्।
स्वोऽस्त्री धने पुमाञ्ज्ञातो त्रिष्वात्मीये स्वमात्मनि।
1730 स्वः स्वर्गे परलोके च त्विट् कान्तिज्वालयोः स्त्रियाम्।
वल्के लवङ्गवल्के त्वग्द्वार्दारोपाययोः स्त्रियाम्।
रमायां देवपूजाया शक्तौ शोभावरेण्ययोः।

इत्येकाक्षरवान्ताः।

भवः ससारसत्तश्रेयःशकरजन्मसु।
उपादाने भस्मनि च सत्ताप्राप्त्योश्च वत्सरे।
1735 भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु।
क्रियालीलापदार्थेषु विभूतिबुधजन्तुषु।
रतिवेगे शब्दवृत्तौ निमित्ते रसबन्धिनि।
भावौ च भवसबन्धे योनौ च स्याद्विकल्पने।
त्रिषु भ भामवति मे (?) प्रभावे च पुमान्भवेत्।
1740 नवस्तु नूतने सौम्ये सख्यायामपि तत्त्रिषु।
सूर्ये समुद्रतरणौ पटे नावा स्त्रियामपि।
जीवो वृक्षे सुरगुरौ तन्तौ प्राणे च जीविते।
जीवा जीवन्तिकाभूम्योर्वचामौर्व्योस्त्रिपूच्यते।
धवः पतौ नरे धूर्ते धूतपादपयोरपि।
1745 ह्वो यज्ञे तथाह्वाने स्यान्निदेशाज्ञयो. पुमान्।
ध्रुवः कीले शिवे शङ्कौ वंशे योगे वसौ मुनौ।
निश्चिते निश्चले तर्के नक्षत्रे शाश्वते वटे।

---

1729. Mss, read स्वे for स्वो. CD त्रिष्वात्मीये
1731 B वल्कलेवक°
1732 Cf. notes A रामाया
1733 AD °सत्त्व-
1735-6 = *MED*. 159-20-1
1735. E °चेष्टास- for °चेष्टात्म-
1736 E °जन्मसु for °जन्तुषु
1741 AE नाव-, B वानरा for नावा
1744 धवौ a wrong form
1745 E ह्वरा for ह्वो
1746 E शिव for वशे Mss मसे for वसौ
1747 AB पटे for वटे

सुचि मौर्व्यां तालभेदे स्त्रियामथ शिवं शुभे ।
मोक्षे सुखे च सलिले माने योगे मनोहरे ।
शिवो हरे गुग्गुलौ च कीले चालुकि (?) वालुके । 1750
पुण्डरीकद्रुमे स्त्री तु भवान्यां जम्बुकेऽपि च ।
अभयायां नदीभेदे चामलक्यां महौषधौ ।
शाटाशम्योश्चाभयायां चाथ देवः सुरे घने ।
राज्ञि क्लीबं त्विन्द्रिये स्त्री तेजनीस्पृक्कयोरपि ।
भट्टारिकाया द(दा ?)र्वीं तु देवदारुहरिद्रयोः । 1755
सुचि दारुहरिद्रायां सत्त्वं द्रव्ये बले गुणे ।
स्वभावे च पिशाचादौ व्यवसायेऽपि प्राणिषु ।
चित्तसद्भावयोर्जन्तावैश्वर्यामोदयोरपि ।
विश्वं समस्ते जगति विश्वेदेवेषु नागरे ।
वा पुंसि स्यात्स्त्रियां विश्वातिविषाकरशब्दयोः । 1760
द्वंद्वं रहस्ये कलहे युग्मे पात्रप्रसाधने ।
दिवं स्वर्गेऽन्तरिक्षे च लवो रामात्मजे कुशे ।
विनाशे छेदने दावदवौ वनवनानलौ ।
नीवी स्याद्बन्धनागारे धने स्त्रीवस्त्रबन्धने ।
अविर्गिरौ रवे मेषे मूषिके कम्बलेऽपि च । 1765
पूर्वोऽन्यलिङ्गः प्राचि स्यात्पुं बहुत्वेऽपि पूर्वजे ।
प्लवो भेके कपौ वर्गे नावे चेवेत्थमर्थयोः ।
एवं चाथ युवो वर्णभेदे यूनि पुमान्भवेत् ।

इति त्र्यक्षरवान्ताः ।

कैरवः कुमुदे क्लीबे पुंसि स्यात्पिशुनेऽपि च ।
सुग्रीवस्तु सुकण्ठे च वालिभ्रातरि कथ्यते । 1770

---

1748. C सुचिमौर्व्यां, D सचीमौर्व्यां, E सूचि-मौर्व्यां
1750. AB हरौ for हरे. A चालिकि
1754. AD blank; B च for स्त्री
1756. E सुचिदारु°
1758. A चित्तस्वभावयोर्
1760. A विश्वात्रि° for विषाति°
1763. E °वनानिले
1769. E कैनवे for कैरव. B कुमुदे for पिशुने
1770. E सुकर्णे for °ण्ठे

गन्धर्वस्तुरगे दिव्यगायके शेखरेऽपि च ।
अन्तराभवसत्त्वे च मृगे पुरुषकोकिले ।
प्रभवो जन्ममूलेऽब्दे जन्मभूमौ पराक्रमे ।
आद्योपलब्धौ ज्ञाने च विभवोऽब्दे धने धृतौ ।
1775 पल्लवोऽस्त्री किसलये शृङ्गारपदगर्भयोः ।
पवने विटपे पिङ्गे रत्नविस्तारयोरपि ।
कितवो धूर्त उन्मत्ते वञ्चके कनकाह्वये ।
प्रसवस्तु फले पुष्पे प्रभवे गर्भमोचने ।
माधवस्तु वसन्ते स्याद्वैशाखे गरुडध्वजे ।
1780 आहवो युद्ध आह्वानेऽध्वरे होमनिदेशयोः ।
निह्नवस्तु नमस्कारे विश्वासेऽपह्नवेऽपि च ।
निकृतौ चाथ सचिवः स्यात्सहाये च मन्त्रिणि ।
उत्सवः प्रसवेच्छाका( ? )मर्षोत्सेधमहःसु च ।
द्विजिह्वः सूचके सर्पे पार्थिवो हायने नृपे ।

इति त्र्यक्षरवान्ताः ।

1785 अनुभावः प्रभावे च सतां च मतिनिश्चये ।
घण्टारवः शणक्षुमे घण्टानादे च पुंसि वा ।
पराभवः प्रभावे च वर्षभेदेऽपि वर्तते ।

इति चतुरक्षरवान्ताः ।

इति राघवीयनानार्थमञ्जर्यां यवर्गादिवर्णान्ताः परिसमाप्ताः ।

शः परोक्षे त्रिलिङ्गे स्याच्छं सुखार्थाङ्गशक्तिषु ।
शिः शिवे शिवकान्तायां स्वापे निर्वाणहिंसयोः ।

इत्येकाक्षरशान्ताः ।

---

1774. AD ध्वने for धने धृने ( = निर्वृतिः?)
1176. BE भवेन for पवने
1783 AD °वेच्छाकामर्षो°, B °वेच्छाकाकर्षो°, cf notes. ABD °महत्सु
1784. E सूत्रके for सूचके
1785 E रतिनिश्चये
1787 Col E वीरराघवीय° for राघवीय°. BCE वान्तशान्तवर्गाः for यवर्गादिवर्णान्ता
1788. After this line should come l 1732

दशा वर्ताववस्थायां वस्त्रान्ते समयेऽपि च । 1790
पाशः क(के ?)शान्ते संघार्थे कर्णान्ते शोभनार्थके ।
छिद्राद्यन्ते च निन्दार्थे पुमान्पक्ष्यादिबन्धने ।
पलायने च रज्जौ च निधानावु( ? )पलम्भयोः ।
वशः प्रभुत्वेच्छायत्तगजेषु त्रिषु तद्वति ।
स्ववशायां वशायां च स्पृहायां च जनेऽपि च । 1795
वशा वन्ध्यासुतायोषाज्ञानिकुञ्जरनारिषु ।
वंशः पृष्ठास्थि गेहोर्ध्वकाष्ठे वेणौ गणे कुले ।
नासादण्डे चाथ कुशं जले दर्भान्तरे नपुम् ।
योक्त्रे रामात्मजे द्वीपे पुमानौदुम्बरे स्त्रियाम् ।
छन्दोगस्तोत्रगणनाशङ्कास्त्वथ कुशीष्यते । 1800
पापिष्ठमत्तयोर्वाले भल्लायामयसि स्त्रियाम् ।
केशो दैत्ये भगे वाले ह्रीबेरे च प्रचेतसि ।
कोशोऽस्त्री मुकुले दिव्ये शस्त्रार्थौघे गृहे तिथौ ।
शिश्ने जातिफले खड्गपिधाने योनिविद्ययोः ।
काशः साम्ये दर्भभेदे प्रकाशेऽपि पुमानयम् । 1805
आशा दिग्भूम्यादितृष्णास्त्वथ राशिस्तु पुंसि च ।
मेषादौ द्रव्यबाहुल्ये विशो वैश्ये नरे द्वयोः ।
स्पशस्तु चारे संग्रामे भीमरे पवनेऽपि च ।
बाधने प्रणिधौ शुद्धे पुंसि प्राश उपाह्वके ।
निशा रात्रौ शारिवयोरश्वादेस्ताडने कशा । 1810

इति त्र्यक्षरशान्ताः ।

प्रकाशोऽतिप्रसिद्धे स्यादातपे कोशवत्यपि ।
प्रहासेऽथ पलाशस्तु हरित्किंशुकयातुषु ।

---

1791. B कराते for क[के°]शान्ते. C कण्ठार्थे, E कर्णार्थे for कर्णान्ते
1793-6 E om. these lines
1796 °नारिषु (metrical shortening?)
1802. E ह्रीवेरे for ह्रीबेरे
1803. cf. line 1844 BC पदे for गृहे
1805 ACD सौम्ये for साम्ये
1806 A वा for च
1808 A भीमरूपवने
1809. B प्राश, E प्राशु for प्राश
1810 CE कशो for कशा
1812. CDE प्रहसे

पत्रे नपुंसि कलशः पयस्यमृतमन्द्रयोः ।
घटे निवेशः शिबिरे वाहन्यासगृहेष्वपि ।
1815 कीनाशस्तु यमे पुंसि क्षुद्रकर्षकयोस्त्रिषु ।
उपांशुघातिनि कर्कशे निदेशस्तु भाषणे ।
शासनोपान्तयोश्चाथाभीशुः प्रग्रहरश्मिनोः ।
विपर्शः साध्वसाधुत्वविवेकेषु प्रशस्यते ।
कर्कशः कठिने क्रूरे कृप(ण?)णे निर्दये दृढे ।
1820 आयुर्वेदे द्रव्यभेदे कृष्णेक्षौ खर्वकाण्डयोः ।
अपीवरे साहसिके निस्त्रिंशः क्रूरखड्गयोः ।
निकाशस्तु प्रकाशे स्यात्सदृशे रहसि स्मृतः ।
निर्वेशो भोगभृतयोः शिरावशेऽपि बालिशः ।

इति त्र्यक्षरशान्ताः ।

जीवितेशः पतौ काले जीवातौ जीविताधिपे ।
1825 उपस्पर्शः स्पर्शमात्रे स्नानाचमनयोरपि ।
अपदेशः पदे लक्ष्ये स्यात्प्रसिद्धनिमित्तयोः ।
औदार्यशौर्यधैर्येषु निःसीमव्यपदेशयोः ।
आश्रयाशो वीतिहोत्रे पुमानाश्रयनाशके ।
लतावंशस्तु वेत्रे स्याद्वल्लीसंघेऽपि च त्रिषु ।

इति चतुरक्षरशान्ताः ।

1830 षः पुमान्विषये स्वर्गे षा स्त्रियां षं विरामके ।
गर्भमोक्षे मर्षणे च परोक्षश्रेष्ठयोस्त्रिषु ।
त्विड्दीप्तौ व्यवसाये च जिगीषायां च धन्वनि ।

इत्येकाक्षरषान्ताः ।

---

1813. A °भरसो, B °भरिसे:
1814. BCD °ग्रेष्वपि
1815 B ष्वपि for त्रिषु
1816. E °घातिनि (metrical lengthening)
1817. ABCD °रश्मये for °रश्मिनोः
1821. Some Mss. निर्दिशः
1822 AD स्तृतः, BE स्मृतं
1824. AD जीवाते, B जीवातुः CE जीवातौ for जीवातौ, supported by *AS.* and *VL.*
1830. E स्त्रौ for स्वर्गे, CDE वं for षं
1831. B ष्वपि for त्रिषु

वृषो धर्मबलीवर्दश्रेष्ठमूषिकराशिषु ।
शुक्राले च पुमान्स्त्री तु कपिकच्छ्वाटरूपयोः ।
सुरसषेऽद्भिषि जिष्णौ च तुरंगे जलजेऽपि च । 1835
शृङ्ग्यामपि वृषा स्त्री स्याद्व्रतिनामासन वृषी ।
कर्षूर्वार्ताकरीषाग्निलेखनेषु च खातने ।
कुल्यायां तु कर्षू चाथ कर्षस्तु कर्षणे फले ।
घर्षस्तु वृद्धावब्दे स्याल्लोके धान्यशमेषयोः ।
क्लैब्यजम्बूद्वीपयोश्च विषं गरलवारिणोः । 1840
उषानिरुद्धपत्न्यां च कालभेदेऽपि पुंसि वा ।
प्रेषः प्रैषः प्रेषणे स्यान्मर्दनोन्मानमानयोः ।
श्लेषः स्यादुभयार्थे च अलाताङ्गारयोः पुमान् ।
कोषोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः ।
दोषः स्याद्दूषणे पापे दोषा रात्रौ भुजेऽपि च । 1845
शेषोऽप्रधानेऽनन्ताख्ये त्रिषु स्यादवशेषिते ।
शेषा प्रसादनिर्माल्याक्षतादानेषु तु स्त्रियाम् ।
तूष्णीमर्थे सुखे जोषं पुण्यकालाब्दयोर्विषुः ।

इति द्व्यक्षरषान्ताः ।

महिषी राजपत्न्यां च महिषस्य च योषिति ।
पुरुषो मानवे सांख्ये ज्ञे च पुंनागजीवयोः । 1850
पुराणपुरुषेऽपि स्यान्नृमाने पौरुषं त्रिषु ।
पुंभावे तत्क्रियायां च प्रभावे संततावपि ।
आमिषं सुन्दराकाररूपादिविषये भवेत् ।
संभोगभोज(ग्य?)योर्मांसे पुंसि चोत्कोचलाभयोः ।
पारावारे च कनके निकषाश्म(षोश्म)परीक्षके । 1855

1834 Mss. °करटाट°
1836 E भमी for वृषी
1837. AD घातने
1838. E च for तु Mss read कषू for कर्षू
E कर्षस्तु कर्षणे फले for post. half
1842. B मर्दने मान°. ABD °मारयो for °मानयो°
1843 CE आलाता° for अलाता°. B °कारे च
CE lacuna for °यो पुमान्
1844 ABCD रोषो for कोषो cf. line 1803
1847 ADE प्रधान-- for प्रमाद--
1855. E पारावारे for परावारे

अभीपुः प्रग्रहे रश्मौ विशेषोऽवयवे नवे ।
निखिलातिशाया-यकद्रव्योपमत्रस्तुषु ।
उष्णीषस्तु शिरोवेष्टे किरीटे पुंनपुंसकम् ।
आकर्षः शारिफलके द्यूतेऽक्षे कार्मुकेऽपि च ।
1860 किल्बिषं त्वपराधे स्यात्रपुंसि दुरिते रुजि ।
शुश्रूषा श्रोतुमिच्छायां परिचर्याप्रधानयोः ।
शैलूषो वाग्जीवे स्यात्किराते नटबिल्वयोः ।

इति त्र्यक्षरषान्ताः ।

सुरे मत्स्ये चानिमिषो नन्दिघोषो रथे पुमान् ।
अर्जुनस्य च शङ्खे च वृषभेन्द्रस्य गर्जने ।
1865 आत्मघोषो वायसे स्यादात्मस्तुतिपरेऽपि च ।

इति चतुरक्षरषान्ताः ।

सः पुंस्युमासुते वायौ देहभा:श्रीद्रुवाजिषु ।
सं पक्षिरयन्वने क्लीबे ज्ञाने ध्याने विवारणे ।
सू प्रेरणे गर्भमोक्षे सेऽभिधेये च सेवने ।
ससत्ये विदुषि श्रेष्ठे साधौ क्लीबमुडौ त्रिषु ।

इत्येकाक्षरसान्ताः ।

1870 हंसः सूर्ये मराळेऽश्वे यतौ च परमात्मनि ।
श्रेष्ठे निर्लोभनृपतौ शारीरमरुदन्तरे ।
मत्सरे मन्त्रभेदे च विष्णौ राजादिपूर्वके ।
हिंसा चौर्ये ताडने स्यादन्योपद्रवबन्धयोः ।
वेधाश्चतुर्मुखे विष्णौ पण्डितेऽपि प्रचक्ष्यते ।

---

1861 AD °ष्णनयो, C °श्यानयो for °प्रधानयो· (प and व and ष and य are indistinguishable in Grantha script)

1863 ABD om lines 1863–5, C नर्दि° for नन्दि°

1868. E प्रेरणे for प्रेरणे

1869 B सरसि for विदुषि

1874 B प्रचक्ष्यते D प्रचक्ष्यते

स्त्री त्वाशीः सर्पदंष्ट्रे हितार्शसायामनुग्रहे । 1875
हासो हास्यरसे शीघ्रगमनानन्दयोरपि ।
वसुर्वृद्धौ धने रत्नेऽनले मधुरहट्टयोः ।
योक्त्रे रश्मौ धनाध्यक्षे देवभेदे च वाच्यवत् ।
ज्योतिः प्रकाशनक्षत्रदृक्सूर्याग्निशिखासु च ।
पुण्यार्थाध्वरपाषाणवेदाङ्गेषु विधावपि । 1880
धनुः प्रियालवृक्षे च राशिभेदे शरासने ।
धनुर्धरे च शूरे च छन्दः पद्याभिलाषयोः ।
वेदे स्वाक्ये वृत्तभेदे उत्सवेऽपि नपुंसकम् ।
रसो वीर्ये गुणे रागे शृङ्गारादौ द्रवे विषे ।
जलेऽङ्गधातौ गन्धे च तिक्तादौ पारदे धने । 1885
आस्वादनेऽथ स्रोतः स्यादिन्द्रिये निम्नगारये ।
अर्चिर्मयूखशिखयोस्तमस्तिमिरवेलयोः ।
गुणे राहौ च मायायां ज्ञानेऽपि परिकीर्त्यते ।
रजस्तु कौसुमे रेणौ गुणधूलीन्द्रियेषु च ।
स्त्रीणामृतौ च न्यासस्तु निक्षेपार्पणसद्मसु । 1890
दाने च मन्त्रभेदेऽथ भावितौषधयोर्वचः ।
तेजो बीजे प्रतापे च प्रभायां परमात्मनि ।
कोशादण्डे मयूखेऽग्नावंशे सूर्ये बलेऽपि च ।
वत्सस्तर्णकपुत्रादौ वर्षे च कुटजे पुमान् ।
विष्णोर्वक्षसि वत्सं स्यात्सरश्च बलरहंसोः । 1895
तपश्चान्द्रायणादौ स्याद्धर्मे लोके हुताशने ।
माघे ग्रीष्मे धर्मराजे क्लेशे च शिशिरेऽपि च ।
वयः पक्षिणि बाल्यादौ सामर्थ्येऽवयवे नपुम् ।
रेतः स्यादिन्द्रिये स्वर्णे निर्यासे स्वादनेऽमृते ।
शब्देऽथ ओजो दीप्तौ च बले तेजसि पुंस्ययम् । 1900
अवष्टम्भे च धातूनां विषमर्क्षेऽपि कथ्यते ।
मसूर्जनन्यां बडवायां लतायां स्त्रियां मता ।

---

1880. CE विद्यावपि
1881. E प्रियाल-
1885. CE ऽग्मधातौ
1887. ABD मयूर- for °ख-
1888. AD राशेः CD रागे for राहौ
1893. A वंशे for अंशे

वर्चः पुरीषे दीप्तौ च रूपे विद्वांस्तु पण्डिते ।
प्राज्ञे चात्मविदि स्याच्च महश्चोत्सवतेजसोः ।
1905 सहो बले सहा मार्गे हेमन्तज्योतिषोः पुमान् ।
हासयुक्ते चाथ नभाः श्रावणावपि कथ्यते ।
नभो व्योम्नि नपुं मेघे घ्राणे पुंसि पतद्ग्रहे ।
मृणालसूत्रे वर्षासु स्यादोकस्त्वाश्रये गृहे ।
पिके पयो जले क्षीरे ज्यायान्वृद्धप्रशस्ययोः ।

इति द्व्यक्षरसान्ताः ।

1910 सारसः कमले शुभ्रे हंसे च जलपक्षिणि ।
गोनर्दमिथुनीकामिष्वपुंसि तमसोऽस्त्रियाम् ।
नदीभेदेऽन्धकारे च श्रीवत्सस्त्वावृतौ बिले ।
आहसो ललिते कृष्णे सुमनाः कुसुमे बुधे ।
मालत्यां त्रिदशे चाथ कनीयाननुजाल्पयोः ।
1915 अतियूनि स्त्रिया कामिन्युत्के मैथुनिभूतयोः ।
कृष्णातीरे च वाञ्छायामौत्सुक्ये लालसा द्वयोः ।
याञ्चायामतिशङ्काया रभसो वेगहर्षयोः ।
मानसस्तद्भवे स्वान्तेऽप्यञ्जसा तत्त्वतूर्णयोः ।
पुंस्युत्तंसः कर्णपूरे शेखरे वा नपुंसकम् ।
1920 दिवौकाश्चातके देवे स्यात्क्षत्रनुरूपयोः ।
स्त्रीलिङ्गे रोदसी भूम्यामन्तरिक्षे नपुंसि वा ।
बीभत्सः स्याद्रौद्ररसे हिंस्रे च विकृतेऽपि च ।
वरीयान्गुरुवरयोः साधीयान्साधुबाढयोः ।
पीनसं स्याद्घ्राणभेदे राक्षसोऽसृक्पवर्णयोः ।

इति त्र्यक्षरसान्ताः ।

---

1903. E [illegible] for व°
1906. A [illegible] for [illegible], AD [illegible], C [illegible] for [illegible]
1908. AC [illegible] for स°
1909 ABD °[illegible]
1917 E om. from [illegible] up to [illegible] in line 1921
1918 post. half B [illegible] corrupt
1921 B [illegible] for नपुंसि वा

विश्वावसुर्वर्षभेदे गन्धर्वेऽपि च पुंस्ययम् । 1925
आङ्गिरसस्त्वब्दभेदे मुनिभेदे तदीरितम् ।
अवतंसः कर्णपूरे शेखरे पुंसि वा भवेत् ।
कुम्भीनसो भुजंगे स्यात्स्त्रियां लवणमातरि ।
मदालसा दैत्यवध्वां चन्द्रहासोऽसिमात्रके ।
राजरावणयोश्चाथ सूर्ये वह्नौ विभावसुः । 1930
कृकलासोऽनेकवर्णे जन्तुभेदेऽपि कीर्तितः ।

इति चतुरक्षरसान्ताः ।

हः शंकरे हरे हंसे रणरोमाञ्चवाजिषु ।
गर्भे प्रचेतसि स्त्री तु हा त्यागे गतिवीणयोः ।
हं क्लीबमस्त्रसुखयोः क्वणिते मणिरोचिषि ।
परब्रह्मामन्त्रणयोस्त्रिषु तून्मत्तहास्ययोः । 1935
हेतुसंबोधनेऽपि स्यात् हा स्त्रियां परिदेवने ।
हुं वितर्के परिप्रश्ने न्यासे च भयदानयोः ।
ही विस्मये विषादे च हि हेतावधारणे ।

इत्येकाक्षरहान्ताः ।

ग्रहोऽवग्रहनिर्बन्धग्रहणेषु रणोद्यमे ।
सूर्यादौ पूतनादौ च सैंहिकेयेऽपि तत्त्रिषु । 1940
पत्नीमन्दिरयोश्चाथ स्नेहस्तु लेपसौहृदे ।
नवनीतेऽप्यहिर्वृत्रासुरे सर्पे च दुर्जने ।
बर्हः पर्णे मयूरस्य पिञ्छे हाहा निवारणे ।
खेदे मोदे च गन्धर्वे हूहू चापि प्रकम्पने ।
व्यूहस्तु सेनाविन्यासे चोत्प्रेक्षावृन्दयोः पुमान् । 1945

---

1929. Mss. मदाल्सो
1930. Mss. °वारण°. cf. notes
1933. B गुहा त्यागेगतिवीणयो; E हा त्यागे गीति°
1936. C परिवेदने
1937. E हं for हु
1938. BD हि for ही
1939. ACDE ( wrongly ) गृहो for ग्रहो

1940. ACDE सिंहिकेयेपि
1941 Before the line a main word गृ° is wanting. B स्नेहतुल्ये च; C स्नेहस्तुले च for स्नेहस्तु लेप-
1942 B °प्यहर्वृत्रासुरे, E °प्यहव्यात्रासुर
1944 E हु हु for हूहू
1945. B सोत्पाक्षा° for चो°

फुहूः स्यात्कोकिलालापनटेन्दुकलयोरपि ।
अहो बतानुकम्पाया खेदे संबोधनेऽह्नि च ।
सह साकल्यसादृश्ययौगपद्यसमृद्धिषु ।
गुहस्तु षण्मुखेऽपि स्याद्देवखातबिले गुहा ।

इति द्व्यक्षरहान्ताः ।

1950　विग्रहः कलहे देहे कोपे विस्तारमागयोः ।
तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहोऽपि च ।
द्वार्योपीडे काष्ठरसे निर्यूहो नागदन्तके ।
वरस्त्रियां स्यादारोहो हस्त्यादिमवर्णके ।
अहहेत्यद्भुते खेदे प्रवाहो जववेगयोः ।
1955　सहस्रबाहुर्बाणेऽर्के कृतवीर्यसुतेऽपि च ।

इति त्र्यक्षरहान्ताः ।

परिबर्हस्तपार्हेऽर्थे पुंसि स्यात्तु परिच्छदे ।
पत्नीपरिजनादानमूलशापाः परिग्रहाः ।
तमोपहो दिवानाथे वीतिहोत्रे निशाकरे ।

इति चतुरक्षरहान्ताः । एकाक्षरळान्तमप्रसिद्धम् ।

पालिरश्री प्रदेशेऽङ्के रेखायां स्यात्सरुच्छदे ।
1960　नळस्तु तृणभेदेऽब्दे कपीन्द्रे भूपतावपि ।
फालिश्चामरखण्डे च जरादिश्लथचर्मणि ।
वलिर्मध्यमरेखोर्मिजीर्णत्वग्गृहदारुषु ।
निम्नोन्नते च वक्रे च रचनायामपीष्यते ।
मौळिः किरीटे धम्मिल्ले जटायामथ पन्नगे ।

---

1953. AD स्त्र°; BC पर° for वर° BCE आरोहे for °हो
1954. ACD हहेत्य°. E ददहेत्य°
1956 B om. lines 1956-8
1958 AD तमोपहो
1961 B स्यादिश्रयचर्मणि corrupt for post. half
1962 E पालिर् for वलिर्
1964 CE मौलिः

